# CHANDIKĀ CHARITA CHANDRIKĀ

BY KRISHNADUTTA

•

GENERAL EDITOR
**Dr. Goparaju Rama**

•

**GAIRVANI GAURAVA GRANTHAMALA**
**No. 22**

•

CRITICALLY EDITED
by
**Dr. Ramkishor Jha**




•

**Rashtriya Sanskrit Sansthan (Deemed University)**
**Ganganatha Jha Campus**
**Allahabad**
**2005**

गैर्वाणीगौरवग्रन्थमाला गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठस्य शोधपत्रिकाया: परिशिष्टरूपेण प्रकाश्यते। अस्यामप्रकाशितानि पुन:सम्पादितानि वा विविधग्रन्थप्रसूनानि संगृहीतानि भवन्ति। एतानि पुस्तकप्रसूनानि स्वतन्त्रतयापि स्वल्पमूल्येन क्रेतुं शक्यन्ते।

**गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठस्यग्रन्थमाला**



प्रधानसम्पादक:

**डॉ० गोपराजू रामा**

का० प्राचार्य:



**गैर्वाणीगौरवग्रन्थमालाया:**

**द्वाविंशतितमं प्रसूनम्**



**महाकविकृष्णदत्त-प्रणीता**

# चण्डिकाचरितचन्द्रिका



सम्पादक:

**डॉ० रामकिशोर झा**



**राष्ट्रियसंस्कृतसंस्थानम् ( मानित-विश्वविद्यालय: )**

गङ्गानाथझा-परिसर:

चन्द्रशेखर-आज़ादोद्यानम्

इलाहाबाद-2

**2005**

महाकविकृष्णदत्त-प्रणीता

# चण्डिकाचरितचन्द्रिका




सम्पादकः

डॉ० रामकिशोर झा






राष्ट्रियसंस्कृतसंस्थानम् ( मानित-विश्वविद्यालयः )

गङ्गानाथझा-परिसरः

चन्द्रशेखर-आज़ादोद्यानम्

इलाहाबाद-2

2005

गैर्वाणीगौरवग्रन्थमालायाः
द्वाविंशतितमं प्रसूनम्

प्रकाशक:
**डॉ० गोपराजू रामा**
का० प्राचार्य:
गङ्गानाथझा-परिसर:
इलाहाबाद-2

●



●

प्रकाशन-वर्षम् : 2005

●

मूल्यम् :

●

मुद्रक:
**प्रयागराज कम्प्यूटर्स**
56/13, मोतीलाल नेहरू रोड
इलाहाबाद-211 002

# Foreword

Among the chain of publications that are brought along with the Journal of the Vidyapeetha under the "Gairvani Gourava Granthamala" the present work the CHANDIKA-CHRITA-CHANDRIKA is the 22nd text. Its author was Sri Krishnadatta who hailed from Mithila in the 18th century.

Lyrical poetry "Geetikavya" was originated from the Geetagovinda. It earned a great popularity in presenting the poetry in a lyrical way. Poets following that pattern started composing their poetry in the same style. Thus many geetikavyas have emerged in abundance.

In the same process the present text also enjoys the Geetikavya status. The Durgasaptasati is known to all and is recited daily in every household. The poet adopted the Durgasaptasati into a Geetikavya. One should play it in tunes. Then only its charm is enjoyed by one and all. All the slokas in the text are set in tunes and in a particular raga.

This way the present text adds a feather to the literature of the Geetikavys.

Its editor Dr. Ram Kishor Jha has been eager to present the text before scholars since quite a long time. He took pains to translate the text which was in Maithili into the Devanagari. Thus he made efforts to bring it to light. He fully deserves appreciations by the scholarly world. I thank him for his noble deed.

**Goparaju Rama**

# प्राक्कथनम्

जनक-याज्ञवल्क्य-गौतम-कणाद-पक्षधर-वाचस्पति-विद्यापति-मण्डन-कुमारिलभट्टादिभिर्विद्वद्भिः पूतीकृतायां मिथिला-भूमौ लब्धजन्मना महाकविना श्रीमता कृष्णदत्तेन मार्कण्डेयपुराणान्तर्गत-दुर्गासप्तशत्यामुल्लिखितं महाकाली-महालक्ष्मी-महासरस्वती-विषयकं कथानकमाधृत्य महाकवेर्जयदेवस्य गीतगोविन्दसरणिमाश्रित्य च ''**चण्डिका-चरितचन्द्रिका**''भिख्यमेकादशरागात्मकं गीतिकाव्यं प्रणीतम्। श्रीकृष्णदत्तस्य रचनासप्तकेष्वन्यतमं गीतिकाव्यमिदमद्यावधि प्राकाश्यं नानीतमितिकृत्वा ममात्र प्रवृत्तिर्जाता। राष्ट्रिय-संस्कृत-संस्थानस्य [मानितविश्वविद्यालयस्य] गङ्गानाथझा-परिसरेऽवस्थिते पाण्डुलिपि-ग्रन्थागारे गीतिकाव्यमिदं मैथिलीलिप्यां मातृकारूपेण सुरक्षितं विद्यते। तदधिगमसंख्या-47258 वर्त्तते। मातृकेयमांशिकरूपेण आखूभिर्भक्षितमत एवापूर्णमेव। पं० हर्षनाथझा-महोदयः प्रसिद्धपाण्डित्यस्य डा० सर्-गङ्गानाथझा-महाशयस्य श्वशुरो बभूव। तदीयव्यक्तिगतसंग्रहे गीतिकाव्यस्यास्यापरा मातृका सुरक्षिता आसीदिति जानराजचम्प्वाः भूमिकाभागेन परिज्ञायते। डा० राजेन्द्रलालमित्रमहाशयेन निर्मिते (Notices of Sanskrit Manuscripts) नाम्नि पाण्डुलिपि-कोषग्रन्थे (Vol. No.-VI, 2003, P. 30) एवञ्च 2035, P. 66 स्थले एतस्याः मातृकायाः केवलमुल्लेखोऽवाप्यते किन्तु कृतेऽपि प्रयासबाहुल्ये ग्रन्थरत्नस्यास्यापरा मातृका मया नासादिता।

तस्मात् कारणाद्ग्रन्थरत्नमिदं पाठ-भेदपुरस्सरं स्वतन्त्रप्रकाशनसौभाग्यं नावाप्नोदितिकृत्वा भृशं चेखिद्यते नश्चेतः। अस्यां स्थितौ ग्रन्थरत्नमिदं कालकवलितं न भवेदितिधिया तत्संरक्षणाय प्रत्नशेवधिसंरक्षणतत्पराणां परिसरस्यास्य का० प्राचार्यमहाशयानां साहित्यशेमुषीजुषां डा० गोपराजूमहोदयानां सम्पादनादेशेन प्रथमन्तावन्मया मैथिलाक्षरेभ्यः नागराक्षेरषु लिप्यन्तरितम्। अनन्तरं तदीयसदाशयतावशात् ग्रन्थमुद्रणानुमतिमधिगत्याखूभिर्भक्षितस्थाने शून्यानि दत्वा गङ्गानाथझा-जर्नलमध्ये गैर्वाणी-गौरवग्रन्थमालायां द्वाविंशतिप्रसूनत्वेन प्रकाशितं सत् विदुषां पुरतश्चकासति ग्रन्थरत्नमिदम्।

मैथिलकवेः श्रीकृष्णदत्तस्य कृतित्वेन प्रथितानि ग्रन्थरत्नान्यधस्तनानि सन्ति। तद्यथा—

1. चण्डिकाचरितचन्द्रिका [गीतिकाव्यम्]
2. गीतगोपीपतिकाव्यम् [गीतिकाव्यम्]
3. पुरञ्जनचरितं नाटकम् [दृश्यकाव्यम्]
4. जानराजचम्पूः [गद्यपद्यसम्मिश्रं विरुदकाव्यम्]
5. लक्ष्मीगुणमणिमाला [स्वाश्रयदातुः जानराजस्य पत्न्याः लक्ष्म्याः विरुदावलिः]
6. गीतगोविन्दव्याख्या [गङ्गा/शशिलेखाभिधाना वेति]
7. कुवलयाश्वीयं नाटकम् [दृश्यकाव्यम्]

गीतिकाव्यप्रणयनपरम्परायां प्रकृतकवेः श्रीकृष्णदत्तस्य 'गीतगोपीपतिकाव्यं' श्रीहर्षनाथ-शर्म्मनिर्मितेन 'भावदीपक'-समाख्येन व्याख्यानेन समलङ्कृतं विद्वन्मूर्द्धन्यैर्महामनीषिभिस्सर्-गङ्गानाथझामहाशयैः ख्रिष्टाब्दस्य 1903 संवत्सरे पाण्डित्यपूर्णसुविस्तृतभूमिकाविलेखन-पुरस्सरं मुम्बईतः प्राकाश्यमानीतम्। एतदपि गीतिकाव्यं जयदेवस्य गीतगोविन्दसरणिमाश्रित्य विरचितं वरीवर्ति। गीतगोपीपतिकाव्यस्य ग्रन्थारम्भे श्रीकृष्णदत्तस्य भणितिस्तदीयार्जवा-तिशयं प्रकटयति। तद्यथा—

**''अश्रान्तं जयदेवदिव्यकवितामास्वादयन्तीं सितां**
**माधुर्यातिशयेन यस्य रसना मन्दायिता च श्रुतिः।**
**भूयस्तत्र रसातिशायनसमुल्लासाय मद्भारती**
**तस्यापि क्षणमप्यनुग्रहपदं यास्यत्यसावम्लवत्।'' 12॥**

''पुरञ्जनचरितं''नाम नाटकमपि श्रीमता लक्ष्मीधरकात्रेमहाशयेन विदर्भसंशोधन-मण्डलग्रन्थमालायां ख्रिष्टाब्दस्य 1961 संवत्सरे कविपरिचयादिरूपं निखिलवेदितव्यं स्वकीयभूमिकायां निरूपितं सत् नागपुरतः प्रकाशितम्। पूर्वोक्ताभ्यामुभाभ्यां सम्पादकाभ्या-माधारेण मातृकारूपेण सुरक्षितानामन्यासां तन्निर्मितीनामाधारेण चैतत्परिज्ञायते यत् कविरयं बिहारप्रान्तस्य मिथिलायां मधुबनीमण्डलान्तर्गत-'उद्यान' (उजान[1]) ग्रामवास्तव्यः

1. 'उद्यानवास्तव्यसमस्तविद्य-श्रीकृष्णदत्तस्य कवित्वमेतत्''। गीतगोपीपतिकाव्यम्, 12/28

सोदरपुरमूलकः[1] मैथिलश्रोत्रियब्राह्मण आसीदिति। कवेरस्य पितुर्नाम '**भवेशशर्म्मः**'' मातुश्चाभिधानं ''**भगवती देवी**'' आसीदिति। त्रिसंख्याकाः कवेरस्याग्रजाः षट्शास्त्रनिष्णाताः बभूवुः। तेषामभिधानं क्रमशः—(1) **पुरन्दरः**, (2) **कुलपतिः**, (3) **माणिकश्च** बभूव। तद्यथा—

**वदति पुरन्दर-कुलपति-माणिक-सोदरकृष्ण-उदारम्।**
**त्रिभुवनमातरि सविधिसमर्पितमखिलं भवति हि सारम्**[2] ॥

अपि च—

**भणति 'पुरन्दर-कुलपति-माणिक'-सोदर कृष्णकवीशे'।**
**वितर दयादृशमम्ब दयामयि भगवति हे जगदीशे**[3] ॥ ४८ ॥

× × ×

तथा च—

**विद्वद्वंशावतंसितः सुचरितस्नातो 'भवेशा'भिधो**
**ज्येष्ठाःयस्य पुरन्दरप्रभृतयः षट्शास्त्रपारङ्गताः।**
**लब्धा शैशव एव येन सकला विद्या प्रसाद्याम्बिकां**
**तेनाकारि बुधेन 'कृष्णकवि'ना श्रीगीतगोपीपतिः**[4] ॥ इति

अन्यच्च—

**''तामम्बां पतिदेवतां 'भगवतीं देवीं'' 'भवेशं' गुरुं**
**भक्त्यानम्य पुरन्दरं कुलपतिं श्रीमाणिकं चाग्रजान्।**
**'गङ्गा'ख्यां जयदेवदिव्यकविता व्याख्यामिमां मैथिलो**
**बह्वर्थप्रतिपादनाय तनुते श्रीकृष्णदत्तः कविः**[5] ॥ (इति च)

उपर्युक्तेषु रचनासप्तकेषु '**जानराजचम्पूः**'' '**लक्ष्मीगुणमणिमालाभिख्यं** ग्रन्थरत्नद्वयं

---

1. क-सोदरपुरकुलसम्भवमैथिलकृष्णकवेरितिगीतम्, चण्डिकाचरितचन्द्रिका, 1/6.
   ख-सोदरपुरकुलजातकविकृष्णम्, गीतगोपीपतिः, 11/26.
2. चण्डिकाचरितचन्द्रिका 1/7.
3. तदैव 10/48.
4. गीतगोपीपतिकाव्यम् 12/27.
5. ('गङ्गा'भिधाना गीतगोविन्द-टीका), 1/2.

युगपदेव राष्ट्रिय-संस्कृत-संस्थानस्य (मानित-विश्वविद्यालयस्य) गङ्गानाथझा-परिसरात् खिष्टाब्दस्य 1976 संवत्सरे कुशलसम्पादकेन डा० जगन्नाथपाठकमहोदयेन सुविस्तृत-भूमिकाऽऽरचनेन प्रकाशितम्। **गीतगोविन्द**स्योपरि '**शशिलेखे**त्यपराभिधाना '**गङ्गा**' टीका, कुवलयाश्वीयं नाटकञ्च कवेरस्य कृतिद्वयमद्यावधि अप्रकाशितमेव। यथा हि मधुसूदन-सरस्वतीमहोदयः पुष्पदन्तप्रणीतस्य '**शिवमहिम्नस्तोत्र**'स्य हरिहरयोरुभयोः पक्षे व्याख्यानं कृत्वा मूलपद्यानामर्थसङ्गतिं स्थापयामास तथैव गीतगोविन्दस्य 'गङ्गा'ख्यायां टीकायां मैथिलकविना श्रीकृष्णदत्तेन शैव-वैष्णवयोर्द्वन्द्वनिरासार्थमुभयपक्षीयार्थसङ्गतिक्षमा व्याख्या आरचिता। स्वकीयव्याख्यारम्भे कविना कृष्णदत्तेन स्वयमेव व्यलेखि-

**शैवं नाद्रियते सुधीरपि मतं प्रायोऽधुना वैष्णवः**
**शैवो नैव च वैष्णवं निजनिजासद्वासनावासिनः।**
**मत्वेत्थं मधुसूदनोऽपि मुरजित्पक्षे महिम्नः स्तुतिं**
**व्याचख्यौ 'जयदेव'सूक्तिमपि तां शैवे पथे योजये॥ 4॥**

'गङ्गा'-व्याख्यायाः परिसमाप्तौ कविरयं भूयोऽप्यात्मनः परिचयेन परिचाययति। तद्यथा—

''माता पुण्य यशस्वती '**भगवती देवी**' '**भवेशः**' पिता
सन्तो यस्य '**पुरन्दरः**' '**कुलपतिः**' '**श्रीमाणिक**'श्चाग्रजाः।
तेने '**मैथिलकृष्णदत्त**कविना तेनेह 'गङ्गा'भिधा
टीकायाः लहरी समाप्तिमगमत् तस्यामियं द्वादशी॥ इति।

अन्ततश्च पुष्पिकायां लिखति—

''इति '**भगवती**'-'**भवेश**'सम्भव**कृष्णदत्त**विरचितायां श्रीगीतगोविन्दव्याख्यायां '**श्रीगङ्गा**'ख्यायां द्वादशी लहरी॥ अस्तु।

**श्रीकृष्णदत्तस्य कालनिर्धारणम्**

कविरयं स्वस्थितिकालविषये स्वकीयासु रचनासु किञ्चिदपि नोल्लिखति किन्तु '**पुरञ्जनचरित**'स्य सम्पादकेन श्रीमता कात्रेमहाशयेनान्तःसाक्ष्याभावाद् बाह्यसाक्ष्या-नामनुशीलनेन पूर्वोक्तनाटकरत्नस्य भूमिकायां कवेरस्य स्थितिकालः खिष्टाब्दस्य 1775

संवत्सरः निर्धारितः। तद्यथा—

In the light of the likely date of पुरञ्जनचरित © 1775 AD; and cronology of his other works" Suggested by us above, his literary activities may with a fair sence of probability, be tantatively assigned to the period 1740-1780 A.D. (page No. 30)

तस्मात्तदीयः जन्मकालः ख्रिष्टाब्दस्याष्टादशशताब्द्याः प्रथमदशके देहावसानकालश्च ख्रिष्टाब्दस्य 1780 संवत्सर-निकटस्थः कश्चन कालः कल्पयितुं शक्यते।

अत्रैतदवधेयम्—'**गीतगोपीपतिकाव्य**'स्य '**भावदीपक**'-व्याख्यानकर्त्ता श्रीहर्षनाथझा-महाशयः पुण्यश्लोकानां डा० गङ्गानाथझा-महोदयानां [ख्रि० 1871-1941] श्वशुरः आसीदिति गीतगोपीपति-भूमिकावलोकनेन परिज्ञायते। अयं हि श्रीहर्षनाथझा-महाशयः श्रीकृष्णदत्तहेतवे-"**स्वमातृमातामहमातुलेन**" इति विलिख्य प्रकृतकविं स्मरति। एतावता श्रीमतां कात्रेमहाभागानामुपर्युक्तं कालनिर्धारणं युक्तियुक्तमेव प्रतिभाति।

महाकविकृष्णदत्तविषये मिथिलायामेका जनश्रुतिः ख्यातिङ्गतेति महामनीषिभिः डा० सर् गङ्गानाथझा-महाशयैरस्यैव कवेः **गीतगोपीपतिकाव्यस्य** सम्पादनकाले कविपरिचयक्रमेण व्यलेखि—"**....बाल्य एव केनापि व्याधिना ग्रस्तो मृतश्चण्डिकाचरणाम्भोरुहषट्पदेन स्वपित्रा स्वग्रामगतचण्डिकायतनं नीत्वा रात्रौ प्रतिमा-चरणयोः समीपं स्थापयाञ्चक्रे। प्रभाते तत्र गत्वा प्रत्यागतासुं तं पित्रादयो गृहं निन्युः। ततः प्रभृत्येव स बालोऽलौकिकप्रतिभाशाली चमत्कारिककविताशक्तिमांश्चासीदित्यादि किंवदन्त्यद्यापि वरीवर्ति।**"

चण्डिकाचरितचन्द्रिकायाः परिसमाप्तावधस्तनेन पद्येन पूर्वोक्ता किंवदन्ती युक्तियुक्तैव प्रतिभाति। तद्यथा—

**देवीदत्तलसत्तमसन्मति-'कृष्णदत्तकवि'नेदम्।**
**निर्मितमम्बागीतमुदञ्चित-मुदयतु हृदि हृतखेदम्॥ ११/६१॥**

**चण्डिकाचरितचन्द्रिकायाः** मातृकेयं प्राचीनकर्गदपत्रेषु मैथिलीलिप्यां विलिखिताऽस्ति। अत्र 1-36 पत्राणि सन्ति किन्तु पत्र सं०-20 सर्वतोभावेन आखूभिर्भक्षितं विद्यते।

मातृकायामस्यां प्रतिपृष्ठेषु 08 पंक्तयः, 40 अक्षराणि च सन्ति। मातृकायाः आकारः 25 × 11 cm वर्त्तते। ग्रन्थान्ते लिपिकारेण न हि स्वकीयमभिधानमुल्लिखितम्, न वा कालनिर्देशः कृतः।

मातृकायाः अन्तिमपुष्पिकायां लिपिकारः लिखति—

"**इतिश्रीकृष्णदत्तकृतौ सिद्धिलक्षणायां चण्डिकाचरितचन्द्रिकायां सम्प्रसादवरप्रदानो नाम एकादशः सर्गः ॥**" समाप्तोऽयं ग्रन्थः इति ॥

प्रथमन्तावद् गीतिकाव्यस्यास्य सम्पादनानुमतिं दत्वा तत्प्रकाशनाय च सर्वविध-साहाय्याचरतामत्रत्यानां प्राच्य-प्रतीच्योभयभाषामर्मज्ञानां का० प्राचार्यमहाभागानां डा० गोपराजूरामाशर्म्मणां कार्त्तज्ञं स्वीकरोत्येष जनः। परिसरस्यास्य प्राक्तनप्रवाचकानां विविधावदातविद्याविद्योतितान्तःकरणानां पूज्यगुरुवर्य्याणां डा० किशोरनाथझा महाशयानां, निवर्त्तमानपरियोजनाधिकारिणां पं० सर्वश्रीजीवेश्वरझा-शर्म्मणाञ्च साहाय्येन मैथिलाक्षरेभ्यः नागराक्षरसंशोधनं सुकरं जातमतः जनोऽयं क्रमशस्तेषामाधमर्ण्यं विभर्ति। प्रयागराज-कम्प्यूटर्स-स्वामिनस्तत्रत्यानां कर्मकराणाञ्च मुद्रणनैपुण्येन स्वल्पेनैव समयेन गीतिकाव्यमिदं मुद्रितं जातमतस्ते सर्वेऽपि साधुबादभाजनानि सन्ति। मुद्रणत्रुटिः सम्भाव्येतिकृत्वा क्षमायाचनैकशरणम्। अन्ततोगत्वा श्रीमल्लक्ष्मणमाणिक्यदेवस्य '**सत्काव्यरत्नाकरोक्त**'-निम्नपद्येनात्रैवोपरम्यते—

"**सभ्याः सदर्थं कलयन्ति काव्ये**
**दिशन्ति दोषान् पिशुना प्रयत्नैः।**
**मधूनि पुष्पे मधुपाः पिवन्ति**
**कुर्वन्ति कीटाः किल वृन्तभेदम्**[1]" ॥ इतिशम् ॥

होलिकोत्सवः,
ख्रि०-2005

विदुषां विधेयः
झोपाह्वो डा०रामकिशोरः

1. कौतुकरत्नाकरप्रहसनात् उद्धृतम्, पद्य सं० 17.

महाकविकृष्णदत्त-प्रणीता

# चण्डिकाचरितचन्द्रिका

॥ ॐ नमश्चण्डिकायै ॥

**सिद्धिश्रीस्साधकानां प्रसरति पुरतो यत्पदाराधकानां,**

**निर्विघ्नं यत्प्रसादादुदयति सहसा सापि निःश्रेयसश्रीः।**

**त्रैगुण्या तत्त्रिमूर्त्तिर्निरुपधिकरुणाश्चर्यमाधुर्यधुर्या,**

**तुर्या सा कापि कुर्यात्सपदि मम मनः शुद्धिबुद्धिप्रसिद्धिम्॥** 1 ॥

**चन्द्रचूडां चिदानन्द-चुञ्चुं चन्दनचर्चिताम्।**

**चञ्चन्तीं चञ्चलां चारु चिन्तये चण्डिकां चिरम्॥** 2 ॥

**सद्गुणाम्बुनिधिवृद्धिकारिणी**

**तापपापतिमिरापहारिणी।**

**सेव्यताममृतसारगर्भिणी**

**'चण्डिकाचरितचन्द्रिका' चिरम्॥** 3 ॥

**मङ्गलमयि जनमङ्गलनामसहस्त्रे। प्रथमयसि धाम्न निरुद्धतमिस्त्रे॥**

**श्रीमति गतिरसि जगदम्ब। जय जयदेवि शिवे॥** ध्रुपदम्॥

हरिमवबोधयसि च हरसि च विधिखेदम्। जनयसि मधुकैटभमतिभेदम्॥

वहसि महोदय-सकल-महोमयरूपम्। शमयसि महिषमहासुरभूपम्॥

शुम्भचमूपतिभस्मभरैरनुरूपम्। वलयसि शर्वमिह क्षितिरूपम्॥

कलयसि निटिलतटं कुपितोदयचण्डम्। दलयसि चण्डशिरोऽपि च मुण्डम्॥

रचयसि परिदर्शितनिजशक्तिविलासम्। रक्तबीजदनुतनुजनिरासम्॥

शुम्भनिशुम्भवधेन तनोषि स शुद्धिम्। अनुगतविबुधसमीहित सिद्धिम्॥

**कृष्णकवे**रिति भणितमतीव विचित्रम्। ज्वलित शिवागुणचरितपवित्रम्॥
श्रीमति गतिरसि जगदम्ब। जय जयदेवि शिवे॥ ९॥

**महाकालीरूपा चकितचतुरास्यस्तुतिशत-**
**प्रसन्नाया मोहं स्मनयति मधुं कैटभमपि।**
**महालक्ष्मीमूर्त्तिर्महिषमवधीद्या खलु महा-**
**सरस्वत्याकारा जगदवति सा शुम्भदलिनी॥ 4॥**

**पूर्णं वर्षशतं पुरन्दर इति ख्याते च देवाधिपे**
**दैत्येशे महिषासुरे च समभूद्देवासुररस्सङ्गरः।**
**तत्र प्रौढबलैर्महासुरबलैर्देवाः पराजिज्ञिरे**
**ते चाधाय पुरो विधिं हरिहराभ्यासं समभ्याययुः॥ 5॥**

**अभिनवकुवलयमलयजसञ्चयरुचिरशरीरनिवेशौ।**
**सरसिजबन्धुसुता सुरसिन्धुसुपूरणपूरसुवेशौ॥**
**धृतमति कृतनति हरिहरदेवौ।**
**ददृशुरमी सुकृतेन कृतेन समाधिभृतेन सुषेवौ॥ [ध्रुपदम्]**

कनकपिषङ्गदुकूलमतङ्गजपुङ्गवचर्मवसानौ।
वलिततलिल्लतजलदविलम्बितघनरजतागसमानौ॥
मसृण-घुसृणतिलकानललोचनरुचिरचिरायतभालौ।
मुकुटघटितमणिविकटजटामय-मुकुटनटत्फणिपाणौ॥
त्रिभुवनभवनविधानविधाविह किमपि मिथःकथयन्तौ।
सुदशन-चन्द्रिकया जगदन्तरतिमिरचयन्तिरयन्तौ॥
समुदितभक्तिसुधारसमज्जनसज्जनमोदन-लीलौ।
कमलविलोचन विषमविलोचनविमलविलोकनशीलौ॥
कनकसदङ्गदवलितभूजङ्गम-सङ्गि चतुर्दशवाहौ।
चन्दनचर्चितभूतिविभूषितगरुडवृषध्वजवाहौ॥

चरणशिरस्स्रवदमरनदीजलशमितजगत्त्रयतापौ।
विलसदुरःस्थललम्बिमनोरममणिफणिहारकलापौ॥
**मैथिलकृष्ण**निवेदितकेशवशङ्कररूपमुदारम्।
शृणुत हृदयमवधाय बुधा बहुविनिहितहितसुखसारम्॥ २॥

**स्फुटकदम्बकदम्बरुचिस्फुरत्पुलकधारि विसारि सदश्रुकम्।**
**स्वमुपकृत्य वपुःपद पद्मयोर्जगरिरे त्रिदशास्त्रिजगत्पती॥ 6॥**
**स्वयमधितिष्ठति शक्रपदं निजभुजयुगविक्रमलब्धम्।**
**महिषमहासुर एष महोदय-जयकमलापरिरब्धुम्॥**
**महिषजिता वयमत्र हरीशौ।**
**शरनमिता भवतोरवतोरतिभयदवतो जगदीशौ॥** [ध्रुपदम्]

निदिशति बह्निपदं प्रतिकञ्चनशमनपदे पुनरन्यम्।
स्थिरयति निजसमशीलतया परमयमिह यातु सुधन्यम्॥
वदति दिगम्बरता वसु-वैभवमपि भसितं किल भोगम्।
योगिबधे भसितं कर इत्ययमुज्झति भर्व्वभियोगम्॥
निजकजने निदधाति चिराय जलाधिपतेरधिकारम्।
निजनगरादनिलं परिकर्षति धनदमथो सनिकारम्॥
अजिरसमूहनमस्य तनोति च मृदुमृदुमरुदनुकालम्।
अमृतकरोऽपि करोति विलेपनममृतरसेन तथालम्।
भजति रुचा चलितस्थितिरम्बुजरसततया रविरेनम्।
कुसुमसुवासिततैलविभावित-दीपिकयेव ससेनम्॥
भुवि विचरन्ति सुरा मनुजा इव दनुजभयेन सशङ्कम्।
चलति तृणेऽपि भजन्ति चलद्वृति-विषमसमीन च कङ्कम्।
निगदति **कृष्ण** इदं किल मुरहर पुरहर-चरणसमीपे।
न भवति भयमण्वपि तिमिरं किमु विसरति विलसति दीपे॥ ३॥

**देवाः दुर्म्मदरम्भसम्भवमहादैत्येन विभ्रंशित-**

**स्थानाः सम्भृतयज्ञभागहरणाद्दौर्बल्यमापादिताः।**

**किं कुर्वन्तु वसन्तु कुत्र करुणा-कल्लोलिनी नीरधी-**

**रुद्योगा विफला बभूवुरखिला वीर्यान्विते तत्र नः॥ 7॥**

**तदुरसि पतितं शितशतधारम्। कुलिशमभूदनुकृतमणिहारम्।**

**तस्य बधं चिन्तयतं हे कृष्णशिवौ॥ ध्रुपदम्॥**

अभवदमुष्य यमायुधमङ्गे। कुण्ठितशक्तिमहारणरङ्गे॥

सवरुणमुक्तभुजङ्गमपाशम्। अमनुत-निजवनिताभुजपाशम्॥

धनदगदा जगदाकृतसारा। तत्र बभूव तदागतधारा॥

दहनशिखाऽजनि कुसुमसमर्चा। का पुनरितरसुरायुधचर्चा॥

तमनिलसमबलमलमभिगन्तुम्। न भवति खलु पुरुषः किमु हन्तुम्॥

कथमबला गणना करणीया। भीरुतया विदिता रमणीया॥

**कृष्णागिरं** शृणु चिन्मयरूपा। शमयति कापि भयं हि सुरूपा॥ ४॥

**वज्रं वज्रधरस्य मोघमभवत्कालस्य दण्डायुधं**

**पाशः पाशकरस्य तत्र गणना काऽन्यायुधानामपि।**

**पुंसः कस्यचिदप्यसौ न समरैर्वध्योविधत्तेर्वरा-**

**दन्यद्वस्तु किमस्ति तस्य हनने यद्योग्यता स्यादिति॥ 8॥**

**आर्त्तत्राणपरावुभौ हरिहरावाकर्ण्य देवेरिता-**

**न्येवं कोपवशं द्वयातिगगुणावप्यापतुः कारणात्।**

**ज्वालाजालजटालमाविरभवत्तेजोमुखाभ्यान्तयो-**

**र्ब्रह्मा स्यादपि तत्रिकं कृतिवशादेकैव मूर्तिस्त्रिधा॥ 9॥**

**सेव्यानुवृत्तिरुचिता खलु सेवकाना-**

**मित्यादितेयनिकरस्य तदाऽखिलस्य।**

**शक्रादिकस्य वपुषो महसां समूहो**

**द्रागिन्र्जगाम सुमहानरणेरिवाग्निः ॥ 10 ॥**

**अपगतदोषमनुष्णसुधाकरमदहनमिद्धशिखाकम्।**

**अवचनगोचरमपि परिचयपदरचिततरणिसमताकम्॥**

**ज्वलदचलाकृतिमभयविकारम्।**

**स्वमिव मनोरथमुदितमलोकत विबुधगणो महसारम्॥** [ध्रुपदम्]

महितलमोहनमहिषमहासुरबलशलभालिहुताशम्।

योगिमनोमयभवनविकाशकनवमणिदीपनिकाशम्॥

प्रतिहति दुःस्थितिनिमिषविमुखमिह विनिमीलयितुं न विषेहे।

नयनगुणं चलितुं पुनरन्यत् उदितजडिम्नि च देहे॥

कथमपि करतलपिहित विलोचनयुगलपुटो हृदितोदी।

उपहितचेतनविधिहरिशङ्करविहितनुतिश्रुतिमोदी॥

किमपि परामृशतिस्म भृशद्युति किमिदमुदीतमुदारम्।

पिहितदिगम्बरदर्शनमम्बरमणिशतडम्बरतारम्॥

दिशि दिशि विसरणशीलमिदङ्करकणलवमुञ्चसि वेशौ

रविदहनौ चिनुतो ननु तद्भवतोऽनुमहस्विषु नेशौ॥

नियतममुष्य रुचःपरिशङ्कित इव वडवादहनोऽयम्।

न बहिरुदेति मनागपि पिवति च निरवधिवारिधितोयम्॥

**मैथिलकृष्णकवे**रिति भाषित मुदयतु सज्जनलोके।

धरणिधराधिपजापदपल्लवभजनविमूलितशोके॥ ५॥

**शनै शनैरैक्यमुपेत्य तेजो**

**राशिस्स आश्चर्यमहाम्बुराशिः।**

**साधुप्रयोगार्थवपुर्विभक्ति-**

**श्चावीरभूव प्रकृतिश्च तुर्या॥ 11॥**

**विबुधानुग्रहकल्पितवपुषस्तस्याश्चिदेकरूपायाः।**
**एकैकावयवस्य व्यक्तिस्तेजोऽभिराम एवासीत्॥ 12॥**

शिवमहसा मुखभासमनोरममनुपमरुचिमुखरूपम्।
न वदति मुखमिति जगति पतन्नधि-लिपिसमताभ्रमकूपम्॥
यममहसा चिकुरभराजलधररुचितरा बभुरेते।
तपनसुता मनुमुद्गत इति निजमित्रतया भुवनेते॥
महिषविसारिघनाशुगवर्षणवारणहर्षितगोपम्।
अच्युतमहमयमाहुरिदम्भुजनिकरमखिलजनगोपम्॥
अजनि रजनिरमणस्य महोभिरहो सुमनोदयविम्बम्।
तत्कुचयुगलममुष्य रुचा किल सीदति कोककदम्बम्॥
शिवसविधे परमाणुनिभोऽमरपतिरिति तन्महसेदम्।
मध्यमभूदतितनिमपयोधरगरिमभरोदितखेदम्।
निविडनितम्बफलकमवलम्बितरूपमभूदिदमीयम्।
महिमहसा महता सकलाधिकमहिमकलाकमनीयम्॥
पावकमहसारतनयनत्रयमभवदतीव पवित्रम्।
प्रदहति दुरितवनानि दिवा निशि सममिदमत्र न चित्रम्॥
शुचि दशनखरमिषद्विजनायक-विरचितसेवमुदारम्।
विधिमहसाऽजनि पादसरोरुहमद्भुतमागमसारम्॥
**सोदरपुरकुलसम्भवमैथिलकृष्णकवे**रितिगीतम्।
त्रिभुवनमातुरुदारवपुःस्थितिवर्णनपरमविनीतम्॥ ६॥

**एतस्याः किल वारुणेन महसा जङ्घोरुनामा पुटी**
**कौवेरेण च वासरेण तु कराम्भोजाङ्गुलीपल्लवाः।**
**वायव्येन शुभे श्रुती अभवतां सान्ध्येन चिल्लीयते**
**प्राजेशेन रदाः पदाम्बुजयुगाङ्गुल्योऽपि सौरेण ताः॥ 13॥**

**तथा परेशामपि दैवतानां महोऽमरैः कल्पिततत्तदङ्गा।**
**तेजोमयी काचिदचिन्त्यरूपा मूर्त्तिर्विरेजे परदेवतायाः॥ 14॥**

**अदितपिनाकधरो रिपुमण्डलपातनकौतुकिशूलम्।**
**हरिवसुदर्शनमरिषु सुदर्शनचक्रमखिलजयमूलम्॥**
**ददुरमरा अवधाय-बधाय सुरारिबलस्य परस्यै।**
**निज निजशस्त्रमधिद्युतितस्यै॥ [ध्रुपदम्]**
जलजमदत्तमहत्तममम्बुधिपतिरनलोवरशक्तिम्।
धनुरिषुधिद्वयमक्षयशरमयमणिनोदधदतिभक्तिम्॥
पविमविरथरविसदृशच्छविमाहितरिपुमदलुण्ठाम्।
सुरपतिरदितगजाधिपभूषणमतिविपुलध्वनिघण्टाम्॥
चर्मविचित्रमसङ्गभुजङ्गमसमकरवालममोधम्।
कालपुमानददादथरोमखनीषु रविर्म्महओघम्॥
दण्डधरोदितदण्डमखण्डतरं वरुणोऽपि च पाशम्।
मणि-चषकं सुरया परिपूरित-मैलविलोतिविकाशम्॥
कवचमणस्त्रभिदं मणिचित्रितमभ्रमिवोदिततारम्।
अदितिजवर्द्धकिरदितपरश्वधमस्त्रचयञ्च सुधारम्॥
प्रकटसटापटलस्फुटगुम्फिततारकमौक्तिकगुच्छम्।
मृगपति मगपतिरर्पयतिस्म च वाहनमञ्चितपुच्छम्॥
वदति **पुरन्दर-कुलपति-माणिक-सोदरकृष्ण**-उदारम्।
त्रिभुवनमातरि सविधिसमर्पितमखिलं भवति हि सारम्॥ ७॥

**प्रजानाथस्तस्यै स्फटिकजयमालां जपफल-**
**प्रदायै हन्तव्या सुरगणनहेतोरिव ददौ।**

**विधाता मन्त्राम्भः करकमुदधिः पद्ममुचितं**

**कराब्जे माले चोरसि शिरसि न म्लानकमले॥ 15॥**

**महादैव्यै तस्यै महिषभरभुग्नेषु सुतरां**

**शिरस्सु प्रत्येकं सममभयहस्तार्पणकृते।**

**सहस्रं बाहूनां शुचि रुचिदधत्यै किल ददौ**

**मणिश्रेणी-शोभासरणिफणिहारं फणिपतिः॥ 16॥**

**मुक्ताहारं विमलमजरे अम्बरे क्षीरसिन्धु-**

**र्दिव्यं चुडामणिमनुपमे कुण्डले नूपुरौ च।**

**साफल्याय श्रिय इव तथा शुभ्रमर्धेन्दुमस्यै**

**ग्रीवा भूषामदितवलयान्यङ्गदान्यङ्गुलीयम्॥ 17॥**

**बह्निशुद्धिसदंशुकद्वयमञ्चलोरुतरङ्गि। किं सुवर्णगुणं दधौ पुनरेतदङ्गविषङ्गि॥**

**अलमकृत सा सहजभासा शिवाऽऽभरणानि॥** [ध्रुपदम्]

एतदाकलिता लता कुसुमानि साधु जहास। मेरुभूमिचरोडुभामपि हारयष्टिरपास॥

कोऽनु नाम शिवाशिरोमणिवर्णनं विदधातु। एति यत्प्रतिविम्बतामिव भालचन्द्रकला तु॥

कुण्डलद्वितयं समञ्चति लोकलोचनलोभि। एकदोदितभानुमण्डल-चन्द्रमण्डलशोभि॥

बाहुहेमलतारुचिद्विगुणीकृतामलभानि। अङ्गदानि विरेजिरे तरुणारुणांशु-निभानि॥

पाणिकल्पलतालवालकलीलया वलयानि। अङ्गुलीयतयाङ्गुलीयकुलानि किं सफलानि॥

पद्मरागमयमद्भुतं पदपद्मरागभरेषु। हंसकद्वयमाह सुस्थितिमीरितेन वरेषु॥

श्रीशिवापदपद्मषट्पदकृष्णदत्तवचस्सु। चित्तमर्पय माधुरीघृतशर्कराम्बुपयस्सु॥ ८॥

**दिक्पालद्रुहिणाच्युतेश्वरशिरस्सन्त्राणहस्तार्पण-**

**स्पष्टाष्टादशबाहुमात्ममहसा प्रत्यर्पितेनामरैः।**

**आविर्भावितमूर्त्तिमात्मविविधाभूषायुधालङ्कृतां**

**नेमुस्तां मुनयो बुधा अपि महालक्ष्मीमलक्ष्मीहराम्॥ 18॥**

तामेकेऽष्टभुजां परे दशभुजामन्ये चतुर्बाहुकां
केऽप्यष्टादशबाहुमाहुरपरे युक्तां सहस्त्रैर्भुजैः।
भक्तानुग्रहकाम्यया प्रकटितानेकाकृतिं सिद्धिदां
यादृग्भावनया भजन्ति खलु ये पश्यन्ति ते तादृशीम्॥ 19 ॥

इतिश्रीमैथिलकृष्णदत्तकृतौ श्रीचण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां 'श्रीचण्डिकाऽऽविर्भावो 'नाम प्रथमस्सर्गः॥

# द्वितीयः सर्गः

**शिवाय जगतां देवी श्रीमती सर्वमङ्गला।**
**प्रणिहन्तुं सुरारीणां मनश्चक्रे सुरैःस्तुता॥ 20॥**

**परमशिवाभरसङ्गितया किमु नमदतितनिमविलग्नम्।**
**स्थिरमिति पुनरपि किमपि शिवापदलग्नमहो न हि भग्नम्॥**
**तमधिरुरोह शिवा मृगराजम्॥** [ध्रुपदम्]

तलिदिव धवलजलदपटलं रुचिगञ्चिततारकराजम्।
असुरजनाम्बुपिपासुविकारितवदनललच्चलजिह्वम्॥
हिमगिरिमिव गहनगुहोदर-विवलदरुणयुगजिह्वम्[1]।
अभिहतिमिलितविगलदुडुमण्डलगगनविसारिसटाकम्।
शिवमिव नटनविसर्पिवलत्सुरसरिदुदबिन्दुजटाकम्॥
पृष्ठनिविष्टमनागवभुग्नमनोरमलूम[2]-पताकम्।
राजतगिरिमिव गण्डशिलातलवलितविलासि-लताकम्॥
असुरगजानधुना विधुनामि हठेन यथा तृणपर्णम्।
क्व नु तदमी इति तद्ध्वनिमूहितुमिव समुदञ्चितकर्णम्॥
अरिकरिनिकर-विदारणखरकर-नखरलसद्गजभुक्तम्।
किमु कुसुमानि दधान सुरापदपरिचरणाय सुयुक्तम्॥
दिविषदभयवरवितरणमङ्गल-जनितमतीव गभीरम्।
भुवनभवन-भरणादधिकं निजयश इव बद्धशरीरम्॥

---

1. युगजिह्वः = द्विजिह्व : सर्पः इत्यर्थ।
2. लूमः = लाङ्गूलः।

**सोदरपुरकुलसम्भवमैथिलकृष्णदत्तकविराजम्।**

मृगपतिवाहिनि पाहि दयारसवाहिनि! भवभयभाजम्॥ ९॥

**पिकीवाणी वीणा मधुमधुरवाणीनिधिरसौ**

**तदानीं श्रीदेवी न्यनददुदिताट्टाट्टहसिता।**

**मृदुत्वं तिग्मत्वं जगदुपकृतिव्यापृतधियां**

**भवत्यर्थापेक्षं समयमनुभानोरिव रुचाम्॥ 21॥**

**त्रिजगति लघुनि न माति स्वमाने।**

**प्रतिरवत्वमिषतो मुहुरयमाने॥**

**श्रीशिवा निनदे परिसर्पति॥** ध्रुवपदम्॥

श्रवणपिधानविधानविहस्तम्। विदधति विधिमपि समुदितहस्तम्॥

सपदिनिवेशिततादृशरुक्कम्। दलयति दनुतनुभवबलवुक्कम्॥

दिक्करिकुलमपि परिहृतदिक्कम्। चकितमवर्तत नगलितविक्कम्॥

शिलष्यति जलधिरवनिमतिकम्पाम्। सिञ्चति पयसा घन इव शम्पाम्॥

कुलगिरिमण्डलमाकुलमस्तम्। चलदलदलमिव चलति समस्तम्॥

अहिततिरुपहितलोचनबन्धा। युगपदजनि बधिरा भृशमन्धा॥

वदति **भवेशसुतो** गुणधानी। सृजति जगदवति हरति भवानी॥ १०॥

**किमेतदित्यश्रुतपूर्वनादः श्रवात्समासादितरोषशङ्कः।**

**सपीतिसद्विप्रबलैः स्वसैन्यैस्तमभ्यधावन्महिषासुरेन्द्रः॥ 22॥**

**मणिमयमुकुटमरीचिविमोषिततिग्ममरीचिमरीचिम्।**

**दिशि दिशि दर्शित-जलदविवर्जित-विमलसुरायुधवीचिम्॥**

**देवीपत्तनभुवि नरलोके। देवीमयमसुरोऽवलुलोके**[1]॥ ध्रुपदम्॥

दशशतभानुसुधामयभानुकृशानुशताधिकभासा।

कलितजगत्त्रितयामलिकेन लतातिरुचं हिमभासा॥

कोऽपिरणादसुरो सुधरो बहिरेतु न हीति समानाम्।

बाहुसहस्रभरेण परम्परितो हरितोऽपि दधानाम्॥

---

1. सेबन्धसमीपे देवीपत्तनम्, तत्र महिषासुरबध इति स्कन्दपुराणे सेतुबन्धमाहात्म्ये कथा।

अतिशययत्नसमुन्नमिता नमदहिपतिमस्तनिविष्टाम्।
किमपि पदां स्पृशतीमवनीमतिदु:स्थितिभीतिविकृष्टाम्॥
राजतपीठभुवि प्रतिमामिव हेममयीमुपविष्टाम्।
स्ववहनसुकृतसमुन्नतिशालिनि पञ्चमुखे सुविशिष्टाम्॥
तलितमिव स्खलिता मणिकोमलसलिलदघट्टनरङ्गे।
नयनविमोषि परिस्फुरणामभिमिलिता मगपतिशृङ्गे॥
कठिनधनुस्सु न चकितचलाचल-सकलतलातललोकाम्।
विविधमहायुधराजिविराजितबाहुमपाकृतशोकाम्॥
भवति यया विधया नयनातिथिरियममला जगदम्बा।
सैव शुभागमनिगममताऽवति **कृष्णवचन**ममृतम्बा॥ ११॥

**व्यस्तापास्तमहास्त्रकास्त्रकुशलारम्भात्मजस्याज्ञया**
**सा रम्भा विवुधद्विषां रणमुखे नो दृष्टपृष्ठापरैः।**
**सेना चिक्षुरचामरप्रभृतिभिस्सैनाधिपैरन्विता-**
**ऽसंख्यासंख्यधराङ्गणे सह महादेव्या तयायुध्यत॥ 23॥**

**भासितहरिता हसनसुखेन। सुरपरितापहरेणमुखेन॥**
**चण्डिकया दानवमायाखण्डिकया॥** [ध्रुपदम्]
कुण्डलितायतधनुरुदितेन। रविविम्बोदितकरललितेन।
जलधरजलधाराविततेन। खगकुलवदनुक्रमचलितेन॥
विधुतविततगिगिहनवनेन। गतिविफलीकृतघनपवनेन॥
सरलसपक्षगुणप्रबलेन। कनकजटितपटुपुङ्खचलेन॥
योधिविरोधिशिरोधिहरेण। गगनमरोधि शरप्रकरेण॥
असुरविमुक्तमहेषु शतानि। तिललवतुलनामुपगमितानि॥
**भगवति-मैथिलकवि**वचनेन। धेहि दयां मयि मोदमनेन॥ १२॥

**सटाच्छटाधूतनभोद्रुमापतत्ताराप्रसूनाहितमौक्तिकभ्रमः।**
**गजस्मृतिक्रुद्धतरः शिवासनं हरिश्चचारासुरकाननेऽग्निवत्॥ 24॥**

**विभ्रममेकतमा कथमेतु मनागपि नाम जपन्ती।**
**इति धृतशङ्कुममरनिकरं प्रति विश्वसितं द्रढयन्ती॥**
**क्षणरणविश्रमणाय परेशा। निश्वसितेन ससर्ज्ज गणा।**
**नियमति कुतुकेन सुवेशा॥** [ध्रुपदम्]

परशुभुशुण्डिशरासनतोमरमुसलगदायुधहस्तम्।
गणबलमातनुतासुरमण्डलमहहसमस्तममस्तम्॥
भुजयुगयन्त्रनियन्त्रणनिश्चलमसुरमुदायुधहस्तम्।
कोऽपि निपिष्य गणोऽधिक कोऽपि मनावितताान विहस्तम्॥
अमरविरोधिशिरोभिरवर्त्तयदुद्धतकन्दुककेलिम्।
पदहतधरणिरजोभिरदर्शयदपि हितहेलिकुहेलिम्॥
असुरगणस्लखलदविरलशोणितकुङ्कुमरागतरङ्गे।
समिदजिरे परिदर्शितसरसवसन्तमहोदयरङ्गे॥
ढक्का-ताल-मृदङ्ग-महानक-डक्का-पणबहुडुक्कम्।
युगपदवादयतानिशसङ्गत-रवपरिपूरितदिक्कम्॥
त्रिभुवनमातरमादरदर्शन-दानदयाशुचिदृष्टिम्।
तोषयतिस्म परो नटनेन मदस्खलितेन सुदृष्टिम्॥
**सोदरपुरकुलसिन्धुसुधानिधिकृष्णदत्तकवि** वाचे।
स्वपदजुषे गुणमर्पय भगवति विहितविनयमिति याचे॥ १३॥

**ततो सुरेन्द्रोऽमृतकूपमज्जना-**
**दजीवयत्स्वां गणपातितां चमूम्।**
**सुप्तोत्थितेरप्रतिपद्यचेतनां**
**देव्या गणैस्सा पुनरप्ययुध्यत[1] ॥ 25 ॥**

**शिवानिदेशादथ केसरी सुर-**
**द्विषोऽवधूयामृतकूपमापपौ।**
**सकृन्मुखोल्लासनलीलयोर्वशी-**
**सुतो मुनिःसिन्धुमिवामरार्थकृत्॥ 26 ॥**

---

1. इयं कथा स्कन्दपुराणे सेतुबन्धमाहात्म्ये वर्णिता विद्यते।

**गणैर्हतानामपि युद्धतीर्थे नापैतिगाढोऽसुरभाव एषाम्।**
**मच्छस्त्रपूता इह सौमनस्यमेते लभन्तामिति साप्ययुध्यत॥ 27॥**
**घण्टानिनदभरैरभिभूतम्। कमपि निपातयतिस्म विधूतम्।**
**वेदमता सायुधिदेवी देवनता॥** ध्रुपदम्॥
मृत्युरिवासुरमतिपरिणद्धम्। कमपि विकर्षति पाशनिबद्धम्॥
कमपि करोति शरैरतिविद्धम्। श्वाविषमिव कुलपटलपिनद्धम्॥
शूलविदारितवक्षसमन्यम्। कलयति भर्भाकितशोणित-वन्यम्॥
कठिनगदापरिपोथितदेहम्। कमपि च शाययतीह गतेहम्॥
कमपि विपुलमुशलेन निरस्तम्। रचयति जठरनिवेशितमस्तम्॥
सममवदाय महासुरकुल्यम्। कमपि तनोति जरासुततुल्यम्॥
**मैथिलकथित**-रणोदयलीला। जयति शिवा-सदनुग्रहशीला॥ १४॥
**अस्तानेन मता चिराय शिरसाऽनेनाऽनूनेनापि सद्-**
**दोषान्यङ्गुलतापरापवदनं श्रोत्रेण वा शृण्वता।**
**बारम्बारमसज्जनोदयसदापत्साक्षिणा चक्षुषा**
**दिष्टया मुक्तइहाहमित्यति मुदा नृत्यत्कबन्धोच्चयः॥ 28॥**
**किं किं मुग्धो न दग्धोदरकुहरभृतिव्यग्रचित्तो विधत्ते**
**धत्ते दास्यं भटोऽसाविति रुषित इव प्रौज्झदेनं स्वमूर्धा।**
**अस्त्यानप्रह्वमूर्ध्नाप्यनुचितकथकश्रावकप्रेक्षकाश्च**
**श्रोत्राक्ष्णाप्यस्मि दिष्ट्या रहित इति मुदे वा नटत्तत्कबन्धः॥ 29॥**
**नद्यः शोणितवारयः समभवन्सद्यः समीकाजिरे[1]**
**कल्लोलाकुलिता द्विपाश्वदितिजान् दूरं हरन्त्यो द्रुमान्।**
**या बद्धाजगरव्रतोन्मुखमहाशृङ्गाग्रनीडोपरि-**
**क्रीडत्काकभुशुण्डतुण्डकुहरं स्वच्छन्दमापूरयन्॥ 30॥**

---

1. समराङ्गणे इत्यर्थः

अनिशमसुरसेना-प्राणपक्वान्नजाता-

त्यशनसमुपजाता जीर्ण दोषो यमोऽपि॥

महिषदनुजसेनानायका सुन्धषायान्?

परिणतरससारान् कासरासूनियेष[1] ॥ 31 ॥

सा लीलयैवारिबलं कबन्धप्रायं विधायातितरां विरेजे।

मूर्त्तेव पादाम्बुजसंश्रितानां दिवौकसां मङ्गलसिद्धिलक्ष्मीः ॥ 32 ॥

इतिश्रीमैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां ''चण्डिकापराक्रमारम्भो''नाम द्वितीयः सर्गः॥

---

1. कसरः = महिषः महिषासुरप्राणानहरदित्यर्थः।

# तृतीय सर्गः

**शिवां खुरश्रेणि-खरच्छुरत्खुरस्फुत्तरङ्गोत्तरथाभ्ररिङ्गणः।**
**मेरुं नवाम्भोद इवाम्बुभिः किरन् शरैरुषायादथ चिक्षुरासुरः॥ 33॥**

**नभसि रभसलसदहिवदसक्तम्। महिषचमूपतिचिक्षुरमुक्तम्॥**
**भव्यवरा श्रीजगदम्बा दिव्यतरा॥ ध्रुपदम्॥**
शरपटलं गरुडद्रुतगत्या। सपदि विभेद निजेषु वितत्या॥
जितशमनभ्रुरवावधुतज्यं। धनुरणुनादथ तस्य ततज्यम्॥
अनुपदमेति स चिक्षुरनामा। यममिति बोधयितुं नु सधामा॥
सारथिमस्य निनाय जयन्ती। संय्यमनीमतिचारु हसन्ती॥
असुरजयश्रियउच्छ्रयहेतुम्। तस्य चकर्त्त शरेण च केतुम्॥
रथतुरगानखिलानपि हत्वा। तमभिजघ्नान समग्रमहत्त्वा॥
कृष्णकवेरिदमुदितमुदारम्। जगदम्बा-पदसेवनसारम्॥ १५॥

**आलम्ब्य साहसमसावथ दानवेन्द्र-**
**सेनापतिः कनकखड्गधरोऽभिसृत्य।**
**आहत्य सिंहमसिना निशितेन मूर्ध्नि**
**सव्ये भुजे भगवतीमपि चाजघान॥ 34॥**

**देवीभुजस्पर्शविभग्नखड्ग-**
**श्चिक्षेप शूलं कुपितस्स तस्याम्।**
**देव्यास्त्रिशूलेन तु तच्च सोऽपि**
**शतार्कभासा शतधा व्यधायि॥ 35॥**

**चण्डी हुङ्कृतिमात्रपातितमहाशक्त्यायुधं तच्छर-**
**श्रेणीदारित शूलशस्त्रमुदयत्कोपं जगन्मातरि।**
**उत्पत्यास्तु नियुध्य वारणशिरस्युच्चैश्चपेटा पत-**
**न्मस्तं चिक्षुरमार्गमन्वगमयत्पञ्चाननश्चामरम्॥ 36॥**

**निहतवती समुदग्रमुदग्रम्। रिपुबलमालुनती च समग्रम्॥**
**शश्वदियं रक्षति विश्वं विश्वमयी॥** [ध्रुपदम्]

दलितमहाहनुतनुरुग्रमुखम्। उग्रवीर्यमपि कृतवत्यसुखम्॥
दन्तमुष्टितलदलितकराला। लसदसिदारितविकटविडाला॥
उद्धतदलनगदायुधसुभुजा। भिन्दिपालहतवाष्कलदनुजा॥
अन्धकताम्र-विखण्डनचण्डा। दुर्धरदुर्मुखहरशरदण्डा॥
विबुधमुदे तत बहुरणयज्ञा। असुरहविर्हवनैकविधिज्ञा॥
वलयितविशिखशतस्रुवयन्त्रा। रचितधनुस्स्वन-पावनमन्त्रा॥
**मैथिलकृष्णमहाकवि**[1]गाथा। जयति शिवापदभजनसनाथा॥ १६॥

**रणाङ्गनासङ्गस्वरिङ्गणान् गणा-**
**नुद्वीक्ष्य देवीञ्च मृगेन्द्रवाहिनीम्।**
**प्रवृद्धरोषारुणलोललोचनः**
**स्वयं समायान्महिषासुरेश्वरः॥ 37॥**

**शृङ्गतटाहतजलदघटाहितनदतटपङ्कविषङ्गम्।**
**कज्जलगिरिमिव समदमतङ्गज-मण्डलसङ्गतशृङ्गम्॥**
**निजमवलम्ब्य समाहिषरूपम्।**
**गणबलमाकुलमातनुतातनुदनुजनुषामनुरूपम्॥** ध्रुपदम्॥

श्वसितसमुल्लसितोपरिविभ्रमितानिशपातितशैलम्॥
निजकरुचा परिधूमपयदिव परितो हरितो सितचैलम्॥
अभ्रविम्बिधनासितबाल-यमायुधभीषणलूमम्[2]।
गिरिवरमिव दधतं शितिपन्नगमानन-तत-विषधूमम्॥
चकितपलायितरविरथवाहनमुद्धतघर्घरघोषम्।
शोषितदिगिभमदं कृतकाल-लुलाप विषाणविमोषम्॥

---

1. मैथिलकविः श्रीकृष्णदत्तोऽत्र आत्मानं महाकवित्वेन परिचाययति।
2. लूमः = लाङ्गूलः।

व्यामशताधिकमानगलस्तलमुन्नतपृष्ठनिवेशम्।
कुलिश-कठोरनटत्खुरताडितभूतलधूतनदेशम्॥
प्रोथविपोथनतोऽथ सशोथ-सुरोऽपि करोति कठोरम्।
कस्यचिदस्य गणस्य चिरस्य च पश्यति कञ्चनघोरम्॥
भ्रमणपरिक्रमणैरपरिश्रममस्यति कञ्चिदखर्व्वम्।
कमपि खुरेण धुनोति खरेण करेण करीव सगर्वम्॥
निगदति '**कृष्ण**'इति विभवति तम इव तावदियं खलमाया।
यावदुदेति न दीपशिखेव हि विबुधमुदे शिवजाया॥ १७॥

**गणान्विधूयाति मदान्धितोऽसुरो**
**मृगाधिपं प्रत्यमरञ्जिधांसया।**
**चकार कोपं जगदम्बिका तदा**
**- सुपर्वभिःकातरदृष्टिवीक्षिता॥ 38॥**

**अविरलघननिःश्वसितं श्वसनम्। धृतनगरनगवनगगनघनम्॥**
**पाशयमभुजया व्रणयति तमथ नगतनया॥** ध्रुपदम्॥
शृङ्गशिखाहति समुदस्तनगम्। घनमिव करकापोथितविहगम्॥
पूर्वसमुच्छलिताखिलजलधिम्। विषमाकृतिनाटितरोषविधिम्॥
खरतरखुरभरखण्डितधरणिम्। निजवपुरपिहितरविरथ-सरणिम्॥
अभिमुखमुपयन्तमतीतभयम्। पुञ्जितमिव निखिलतिमिरनिचयम्॥
तरुणतरणिकिरणारुणनयना। उदयदमृतकरमण्डलवदना॥
दीपशिखोपमनिजतनुमहसा। किमु कुपितेति मता जनमनसा॥
**भगवतिसुत-मैथिलकविवचसा।** भजत शिवाममलधियो मनसा॥ १८॥

**बद्धोऽनन्यसमाधिराधित तदा सैंहं शरीरं महा-**
**मायां प्रत्यपि मायया व्यवहरन्नम्भात्मजस्तत्क्षणात्।**
**यावत्तस्य शिरोच्छिनद् भगवती तावत्स चर्मासिमा-**
**न्भूत्वा वीरपुमानयुध्यत तमप्येषाच्छिनच्छायकैः॥ 39॥**

तस्याथ नागेन्द्रवपुर्द्धरस्य प्रसारितं सिंहविकर्षणाय।
हस्तं महापन्नगपीवरं सा चिच्छेद खड्गेन यथेक्षुकाण्डम्॥ 40 ॥

माहिषं रूपमास्थाय पुनरेवातिविक्रियः।
उद्दिदीपे भृशं दीपो निर्वास्यन्निव दानवः॥ 41 ॥

अवलम्बितरसमधुपानकला। निगमागमनिगदितमानबला॥
गर्ज मुखरमुमा। महिषमसुरमवददसमा॥ ध्रुवपदम्।
मदमुखरागसमाकुलवचना। घूर्णितशोणविलोचनरचना॥
गर्जसि गर्ज कियत्तव बलनम्। मूढमते निकटे यमकलनम्॥
यावन्मम न भवति मधुरसरसनम्। तावत्तव खलु जीवितवसनम्॥
सुखमवलोकय जगदिदमवनम्। पुनरतिदुर्लभमिदमभिमिलनम्॥
किमिति विषाणयुगं ननु धुनुषे। योग्यमिदं घनवाहनधनुषे॥
इह परिगर्जतु समुदितहसनम्। सुरकुलमुज्ज्वलभूषणवसनम्॥
बुधजनसुखदं मैथिलगुणितम्। जयति जगज्जननीशुभभणितम्॥ १९ ॥

इतिब्रुवाणा जगदेकमाता दूरात्समुत्प्लुत्य तमारुरोह।
आक्रम्य पादेन समुन्नमय्य शूलेन कण्ठे समताडयच्च॥ 42 ॥

आक्रान्तः शिवया पदा निजमुखादर्द्धं विनिष्क्रान्तवान्
बद्धस्पर्द्धतया विलादिव शिलायन्त्रावरुद्धादहिः।
रुद्धान्तर्बहिरिङ्गणप्रसरणेऽसौयुध्यमानस्तथा
चित्रं चारु महासिना भुवि शिरश्छित्वा तया पातितः॥ 43 ॥

पादाक्रान्तलुलाप कायफलकां शूलाग्रनिर्भिन्नत-
त्कण्ठप्रस्रवदस्रकुङ्कुमरसश्रीरञ्जिताशाम्बराम्।
स्वाम्यार्द्धोद्गतयुध्यमानमहिषोत्तुङ्गोत्तमाङ्गच्छिदा
प्रागल्भ्यस्फुरितासिपाणिममरा देवीं नमन्तिस्म ताम्॥ 44 ॥

देवान्द्विषन्नपि मुनीन्महिषस्थिरोऽसौ
सौभाग्यभाग्यमहिमैकनिधिर्मतो नः ।
ब्रह्मादिदुर्लभमवाप शिवापदाब्ज-
स्पर्शं यदेष निजदेहवियोगकाले ॥ 45 ॥

अज्ञानरूपं महिषं निहत्य सा ज्ञानशक्तिः शुशुभे स्वसिद्धिः ।
प्रदीपलेखेव तमःप्रभेव वैरोचनी चान्द्रमसीव दीप्तिः ॥ 46 ॥

इतिश्रीमैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्ष्णायां
"चण्डिकाविजयो"नाम
तृतीयस्सर्गः ॥ 3 ॥

# चतुर्थः सर्गः

**आनन्दमङ्गलमहोदयनीरराशिर्लीलावगाहविलसत्पुलकाकुलाङ्गाः।**
**शक्रादयः समभवन्ननृतुर्द्युनार्यो गन्धर्ववृन्दमतिसुन्दरमभ्यगायत्**[1] ॥ 47 ॥

**कोमलतामरसोदरसोदर-सहजसुगन्धशरीररुचे।**
**मलयजकुङ्कुममृगमदलेपनमर्पयतिस्म निरस्तशुचे॥**
**विबुधव्रजो महिषद्विषे। विदधेऽर्च्चनं परमत्विषे॥** ध्रुपदम्॥

कृतघनविभ्रमसम्भृतसौरभ-पेशलकेशनिवेशभृते।
दशविधधूपविशेषमदर्शयदखिलमनोरथसिद्धिकृते॥
अपगतदूषण-विविधविभूषण-भाभरभासितसर्वदिशे।
दीपशतानि समर्पयतिस्म च रवि-शशि-पावकचारुदृशे॥
स्फुरदतिमुक्तरदावलयेवर-सरसिजकरपदवदनदृशे।
तिलकभृते तिलकुसुमनसेऽतुल-करुणोदयकोमलमनसे॥
सकलसुमावधये कुसुमालिमुपाहरदनुगतभक्तितुषे।
विविधनिवेद्यमुपानयतिस्म च चिद्घनतापरितृप्तिजुषे॥
तरुणतरणिकरनिकरसरञ्जन-कञ्जसुगञ्जनसञ्जनकम्।
सततसमाधि-सभाधिनिरञ्जन-मुनिजनमानस-रञ्जनकम्॥
उपनिषदरुणकिरीटनिवेशित-हीरकरुचिशुचिनखरुचिरम्।
निजककिरीटमणीभिररञ्जयदिदमीयम्पदमतिसुचिरम्॥
हिमगिरिपतितनयापदधृतमति '**कृष्णदत्तकविराज**'गिरा।
भजत मुदं विबुधा बहुधा वसुधा स्वसुधारससारकिरा॥ २० ॥

---

1. शक्रादयः सुरणेत्यनेन पद्येन तुलनीयं पद्यमिदम्।

**श्रीचण्डिकाचरणपङ्कजचिन्तनार्चा-**
**दण्डप्रणामसफलीकृतचित्तदेहाः।**
**एते कृतार्थयितुमात्मगिरं चिरन्तां**
**स्तोतुं सुधांशुतिलकां समुपाक्रमन्त ॥ 48 ॥**

**पारमवाप न वेदगणस्तव महिमनि परमदुरूहे।**
**बहुमतिमेति किमपि सगृणन्निह कालवदन्धसमूहे ॥**
**जयमहिषासुरमर्द्दिनि दुर्गे!।**
**दुर्गतिदारिणि भगवति विभवति भवती भावितभ्रूभङ्गे ॥** [ध्रुपदम्]
तवपदधूलिकणानवचित्य जगद्विदधाति विधाता।
पाति रमापतिरिदमुदितायति हरति हरो गुणगाता ॥
गौरी गिरिशगृहेऽसि गदाभृत उरसि रमा कमनीया।
विधिभवने ननु गीरसि विहरसि परमा कापि तुरीया ॥
सुरगणशक्तिसमूहमयी महिषासुरशासनदक्षा।
परिवलते भवती करुणामयि कलितजगत्त्रयरक्षा ॥
मणिमयकुण्डलकिङ्किणिकङ्कण-विविधविभूषणभव्या।
धनुरसि-शूल-गदादि-वरायुधपाणिरनुक्षणनव्या ॥
गायतु नस्सततं रसना जनमङ्गलभवदभिधानम्।
श्रवणपुटी विदधातु सुधारसमधुरभवद्गुणपानम् ॥
भवतु मनो भवदीयमनोरम-पदपरिचयरसमग्नम्।
करयुगलञ्च सदा तव पूजनसम्भृतिसाधनलग्नम् ॥
वदति **भवेशसुतो**[1] जनरञ्जनमिदमम्बापदसेवी।
भुक्तिविमुक्तिमहोदयदा भुवि केवलमेव हि देवी ॥ २१ ॥

---

1. महाकवेः कृष्णदत्तस्य पितुर्नाम 'भवेश' इति अन्तःसाक्ष्येन स्पष्टीभवति।

**वृद्ध्यै सत्कर्मजातं निजधनमखिलं साधुभिः सुप्रयुक्तं**

**विश्वस्य त्वय्यमीभ्यस्त्रिगुणपदफलं सत्फलत्वं ददाना ॥**

**लोके वेदेऽप्यपर्णा प्रथितिमुपगता नाधमर्णेव किम्वा**

**दासे तेभ्यस्तथापि सुमनसि मनुषे किञ्चिदेभ्यो न दत्तम् ॥ 49 ॥**

**अमलकमलदलमदविमोचनलोचना । अपकृतचरणशरणजनहृदयशोचना ॥**

**चण्डिका जयति जगदम्बिका भयतिमिरचन्द्रिका ॥** ध्रुपदम् ॥

समुदितविरोचनशतसमधिकरोचना । गौरिमगरिमतिरस्कृतकनकरोचना ॥

ललिततिलकायितशिशुशशतिलकालिका । मुखकमललोभतरललसदलकालिका ॥

निरुपधिकरुणानिधिरखिलशुभकारिका । अस्मदसुरवरकृतविपदुदधितारिका ।

सङ्गरनिहतविबुधरिपुसुगतिदायिका । निखिलनिगमगणगीतगुरुगुणधायिका ॥

जडमपि विकलमपि विहितपदसभाजनम् । सपदि तनुतेऽनुमतसुमतिवशुभाजनम् ॥

उज्ज्वलवपुषमतिसुरसस्वरसभावनम् । किमपरमधिकमुदयदमृतरसभावनम् ॥

**मैथिलकृष्णसुकवि**वचनमिदमुत्तमम् । रमयति शिवाचरणभजनविलसत्तमम् ॥ २२ ॥

**स्मृता स्मृता वो विपदो हरिष्ये**

**स्वस्थाः सुखं भावयताधिकारान् ।**

**आश्वास्य विश्वास्य सुरानितीयं**

**स्तुतिप्रसन्नान्तरधीयतेशाः ॥ 50 ॥**

**प्राच्यामवाच्याममराः प्रतीच्यां**

**ककुभ्युदीच्यां समुदीक्षमानाः ।**

**तस्यै परस्यै प्रणिपत्य सिद्धि-**

**प्रसिद्धिमन्तो निजधाम जग्मुः ॥ 51 ॥**

**इतिश्रीमैथिलकृष्णदत्तकृतौ श्रीचण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां शक्रादिदेवरचिता "श्रीचण्डिकास्तुति"र्नाम चतुर्थः सर्गः ॥ 4 ॥ श्रीरस्तु ॥**

# पंचम सर्गः

**श्रीमन्तस्त्रिदशाः सुखोत्सववशाः सन्तोऽपि काले वहौ**

**याते शुम्भनिशुम्भदानववराच्छिन्नाधिकारश्रियः।**

**देवीं तामपराजितामभयदां संसस्मरुर्बालकाः**

**खेलन्तः प्रबलापनीतगुलकाः शंसन्ति मातुः पुरः॥ 52॥**

**हिमालयं सन्महिमालयन्ते ततः समासाद्य धृतव्रताः स्मः।**

**परीप्सवः सिद्धिमिमाममी तामुमाममायाममराः स्तुवन्ति॥ 53॥**

**हरिमाया भवती विदिता भवविस्तारणबहुमुद्रा।**

**चेतना च भवती भयहारिणि देविबुद्धिरपि निद्रा॥**

**संसृतिबन्धनबीजमिहैका। मुक्तिनिदानमसि सदतिरेका** ॥ ध्रुपदम्॥

च्छाया क्षुदसि च शक्तिरुदञ्चसि तृष्णा दुस्सहसारा।

क्षान्तिरसि त्वं जातिरसि त्वं लज्जाशान्तिरपारा॥

श्रद्धा कान्तिरसि प्रथिता भुवि लक्ष्मीरस्यविकल्पा।

वृत्तिरसि त्रिगुणा धृतिरप्यसि भवसि स्मृतिरनुकल्पा॥

प्रतिवपुरुपचयकारणमनुदिनमसि पुष्टिः स्पृहणीया।

हृदयसमुत्सवसमुदयसाधनमसि तुष्टिर्महनीया॥

मातृरूपमवलम्ब्य जगन्ननु जनयसि रक्षसि नित्या।

भ्रान्तिरसि भ्रमयस्यपचेतनमिव चेतनमपि गत्या॥

नासारसनश्रुतिनयनत्वचकरणाधिष्ठितिशीला।

त्वमसि जगन्मयि जगदवलम्बन-परमा ते चितिलीला॥

अलमथ कथनसहस्रशतैरिति परममिदं किलतत्त्वम्।

वस्तु किमस्ति तदत्र जगत्त्रय-जननि न यद्भवसि त्वम्॥

**सोदरपुरकुलसम्भवमैथिलकृष्णकवेरिदमुक्तम्।**
श्रृणुत पठत विबुधा बहुधा भुवि जगदम्बागुणयुक्तम्॥ २३॥

**हे रुद्राणि मृडाणि पार्वति महामाये जयत्यम्बिके**
**दुर्गे गौरि भवानि कौशिकि शिवे शर्वाणि नारायणि।**
**आर्ये कालि सनातनि त्रिनयनेऽपर्णे जये सत्युमे**
**कात्यायन्यपराजिते भगवति! श्रीचण्डिके रक्ष नः॥ 54॥**

**समुचितशुचिक्रिया समुदितरुचिश्रिया विक्रियारहितगुणवत्या।**
**कृतसदनुरोधया विहितखलरोधया जगदवितमिदमिति भवत्या॥**
**नमो देवि दुर्गे देवजनभद्रकारिणि भवत्यै।**
**अतिसदयचेतसे तत सदयेमेधसे वेधसेऽपि न कलितगत्यै॥** ध्रुपदम्॥
ज्वलदनलचारिणीमुदयदसिधारिणीमविलम्बितकृतवरदानाम्।
विपदुदधितारिणीमभिदधति तारिणीमिह भवतीमतिततमानाम्॥
करधृतकपालिका गलितकैचपालिका परिपालितभक्ता।
त्वमसि किल कालिका रुचिविजितकालिका कलिकालदलनविधिशक्ता।
अभयवरसम्मुखी भजति भृशमुन्मुखी त्वमसि सखीयुगहितभव्या॥
त्वमसि सुमुखी मुदा भजति सुमुखी सदा करशुकशिशुबोधनदिव्या॥
सुजनभयतिमिरकैरवी त्वमसि ननु भैरवी धूमावत्यसि गतशोका।
त्वमसि बगलामुखी त्वमु कमलामुखी कृतनिजपरिसेवकलोका॥
त्वमसि कमला दयाधामकमलालया भुवनोत्तरभुवननेशी।[1]
वहसि ललिताकृतिं बहलललिताधृतिं दिशसि रुचिरघनरुचिकेशी॥[2]
गमयतु तपस्यया जनुरपि नमस्यया जपतु च मनसि मनतु वेदम्।
तव भजनमन्तरा जननि! किमनन्तरामपहरति गतागतखेदम्॥
जनितजनरञ्जनं दुरितभयभञ्जनं **कृष्णदत्तकविशु**भगीतम्।
जयति जगदम्बिका-चरणकमलद्वयी मधुरसमिलितं नवगीतम्॥ २४॥

---

1. धृतकमलाकमनीया इति पाठान्तरम्।
2. सुकृतशतभजनीया " "

**अथ पार्वणेन्दुसदृशेन पार्वतीवदनेन तद्भयतमोविनिघ्नती।**

**सुरसिन्धुमज्जनमिषादुपायती विबुधानपृच्छदविदो विदेव सा॥ 55॥**

**केन किमपकृतं कठिनमनसा। भवतामुचितकृतामतितरसा।**

**कस्य कृते वितनुथ कस्या अत्र नुतिम्॥** ध्रुपदम्॥

कलये भवतामानन-नलिनम्। बहलविषादहिमाधिकमलिनम्॥

लोचनयुगलमतिचकितलुलितम्। शबरसमीप-पतितमृग-तुलितम्॥

समुदितशङ्कितमिव हृदयतलम्। अनिल-तरलचलदलदल-चपलम्।

सरभसकेसरिनिनदितमुखरे। चकितशबरकरतलगणितशरे॥

पिहितदिगम्बरसमुदितशिखरे। मदकलकरिकुलकुहकितकुहरे।

हिमपिच्छिलविपुलशिलानिकरे। सीदथ किमिति तुहिनधरणिधरे॥

**भगवति-तनयकवे**[1]रिदमुदितम्। जनयतु स्वजनं समुदित-मुदितम्॥ २५॥

**वक्तुं न शक्ता गुरुणापि शिक्षिता स्तस्याः पुरस्ताद्विबुधा गिरान्निधेः॥**

**परस्परस्याननमात्तविस्मयाः किमुत्तरं देयमिति व्यलोकयन्॥ 56॥**

**सौन्दर्यसाराद्भुतधामपार्वती**

**शरीरकोशादथकाचिदुद्गता।**

**स्वयं ततः शुम्भनिशुम्भखण्डनः**

**-क्षमासु कोशादसिवल्लिका यथा॥ 57॥**

**लवणिमसिन्धुसमुस्थितशैवल-वलितसुधानिधिभानम्।**

**मधुरिमरससरसीभवमिलदलि-सरसकमलमतिधानम्॥**

**निजगाद गिरं गिरिपतिभुवमिति सा ताम्।**

**वदनसुधानिधिसरससुधामिव दशनरुचिभिरवदाताम्॥** ध्रुपदम्॥

सहजरुचिरशुचि-मृदुलहसितरुचि-तरलदलकवलमानम्।

मुखममलं दधती लसदद्भुतमणिमयमुकुरसमानम्॥

---

1. कवेः कृष्णदत्तस्य मातुर्नाम भगवतीति स्वगिरा स्वीकरोति कविरयम्।

कुङ्कुमरागविलिप्तमिवामलकनकद्रवजटितं वा।
रुचिभिरुपादधती हरिदम्बुदमरुणतराधरविम्बा॥
सुरुचिविलोकनलोभविकस्वर-कुसुमविलोचनकेशा।
अवजितपुष्करशोणसितासित-पावननयननिवेशा॥
त्रिभुवनसुन्दरतागुणलेख-सुलेखसुलक्षणकण्ठी।
अमृतमधुद्रवमधुरतरध्वनि-कुण्ठीकृतकलकण्ठी॥
नासावंशवलितनवदलयुग-सुललितचिल्लिविलासा।
रदततिदाडिमलोभमिलच्छुकचञ्चुमतिप्रदनासा॥
शुम्भनिशुम्भपराजितभञ्जित-परिगञ्जितपदमाना।
मम नुतिमातनुते विबुधावलिरभिलसिततदुपयाना॥
निगदति '**कृष्ण**' इदं विबुधा अवधारयतामृतवृष्टिम्॥
किमसुलभं जगतो जननी यदि तनुतेऽनुग्रहदृष्टिम्॥ २६॥

**निरुत्तरा यत्पुरतोऽभवन्बुधा-**
**स्तस्या असावुत्तरमुत्तमं ददौ।**
**अवाप सा तेन महासरस्वती**
**प्रसिद्धिमाश्चर्यदयासरस्वती॥ 58॥**

**सिद्धं नः सुसमीहितं यदनया प्रोक्ताभयत्राणगी-**
**रित्यन्तर्विकसन्मुदो दिविषदः सर्वेऽपि शक्रादयः।**
**पार्वत्यास्तनुकोशतः प्रभवनाद्देवीं श्रुतां कौशिकीं**
**नेमुस्तामपि कालिकां तदवधिख्यातां घन-श्यामलाम्॥ 59॥**

**मोहमसुरनिकरस्य विधातुम्। विविध-विबुधजनमुदमुपधातुम्॥**
**कौशिकी हिमभूभृति खेलति॥** ध्रुपदम्॥

हिमगिरिविहितसुकृतमभिजातम्। त्रिजगति परिणमयितुमवदातुम्।
क्वचिदपि वलयति कन्दुकमम्बा। वदनकमलसदलककदम्बा॥

नमत इव द्रुमतः स्वमजातम्। क्वचिदवचित्य करोति सुजातम्॥
अनुकृतमघवशरासनखण्डम्। कलयति शिरसि शिखण्डिशिखण्डम्॥
स्तुतिशतमिव विटपिभिरुपनीतम्। क्वचन शृणोति च मधुकरगीतम्॥
उपललुलितझरसलिलनिनादम्। कलयति विरचितवादनवादम्॥
कृष्णकवेरितिमङ्गलगीतम्। जनयति मोदममृतमिव पीतम्॥ २६॥

साक्षात्तपस्सिद्धिरिवर्षिवृन्दैः
प्रहर्षिभिः सादरमीड्यमाना।
आमोदिमन्दानिलसेव्यमाना
क्रीडापरा मोदमधत्त देवी॥ 60॥

इतिश्रीमैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां
''चण्डिकाविहारो''नाम
पञ्चमस्सर्गः॥ 5॥

# षष्ठः सर्गः

**लक्ष्म्या स्फुरन्तीं गिरिवासिनीन्तां**

**दृष्ट्वा कदाचित्किल चण्डमुण्डौ।**

**विज्ञाययामासतुरात्मराजं**

**शुम्भं पदाधस्कृतदेवराजम्॥ 61॥**

**त्रिवलिनदीतरणाततकोमललोमलतैकपदीका।**

**निजरुचिकनकगिरीकृतहिमगिरिरपहृतसकलहृषीका[1] ॥**

**अस्ति शिरीषकुसुमसुकुमारी।**

**लवणिम-मधुरिम-चतुरिममङ्गलपदमिह कापि कुमारी॥** ध्रुपदम्॥

सुनयनरञ्जितचलितश्रुतीपथ-मण्डनकुन्तलमुक्ता।

हिमगिरिशिरसि तपसि धृत-रतिरिह रतिरिव मदन-वियुक्ता॥

प्रतिवपुरुच्छलदच्छतमच्छवि-लहरिकृतामृतवृष्टम्।

क्वचन न केनचिदद्भुतमीदृश-रूपमिह श्रुतदृष्टम्॥

यदमृतविभजनकर्मणि मधुरिपुरधितवधूवपुरिष्टम्।

तदपि तदेकशरीरसमुत्थितरुचिकलिकाशिलमृष्टम्॥

त्रिभुवनरत्नभुजस्तव सद्मनि कल्पतरुतस्तरुरत्नम्॥

हरितुरगो[2] हयरत्नमुदञ्चति दिगिभपतिर्गजरत्नम्।

सुरनरकिन्नरपन्नगढौकितमस्ति यदुत्तमरत्नम्।

तदखिलमफलभृते दनुजाधिप! तामबलाजनरत्नम्।

सा पुनरेकचरी भवता कथमहह न गृह्यत एषा।

तदनुभवेन भविष्यति मयि तव संप्रमितिस्सविशेषा॥

---

1. हृषीकं विषयीन्द्रियमित्यमरः।
2. हरितुरगः = उच्चैश्रवेति।

चण्डपिशुनजनवचनमतिप्रियमपि मृदुलं[सु]गृहीतम्।
विषमफलं वमति विषकुसुममिव **कृष्णेने**तिसुगीतम्॥ २८॥

**तद्वाक्यमाकर्ण्य निशुम्भपूर्वजन्मा स्वजन्मामनुतात्यपूर्वम्।**
**तदन्वमन्यन्त परेऽथ कश्चिदूचेऽर्थदर्शा सचिवोऽतिवृद्धाः॥ 62॥**

**विमलकुलप्रभवा विभवानुभवाभिनवाकृतियुक्ता।**
**वलिवलिता विलसत्यबलावलिरिह तव भजननियुक्ता॥**
**परिहर मतिमिति भृशमयशस्याम्।**
**अचलवनस्थितिभाजि निजायति भृतिपरयोषिति तस्याम्॥** ध्रुपदम्॥
प्रियमनुसृत्य तवानुचरेण चरेण च गीरियमुक्ता।
प्रियवचना बहवो विभु-संसदि विरलतरो हितवक्ता॥
निरवधि वस्तु न किमपि भुवोऽवधिरुदधिरमुष्य धरित्री।
अनवधिरूपगुणातिशया कथमाकृतिरत्रभवित्री॥
अथ यदि सत्यमिदम्वचनन्तव भाति तदा कलयेदम्।
किमपि भविष्यति कारणमत्र विचित्रचरित्रविभेदम्॥
असदपि सदिव यया विहितं जगदखिलमिदं गुणवत्या।
सैव भवेदवतारवती भुवि समयत्रय-तत-सत्या॥
भवदनरबलशक्तिरपाकृतसर्वसुपर्व्वललामा।
तृणमिव वह्नि-रुचा निरदाहि यया महिषासुर नामा॥
आखण्डलमुखदैवतमण्डलदण्डन-भण्डनचण्डम्।
सपदि विभेद चयाललिताकृतिरसुरधराधिपभण्डम्॥
"**कृष्णदत्त**" इति भणति मनोरममादरतो जगदम्बाम्।
भजति सुकृतमतिरुपलभते गतिमुपचितमुखनिकुरम्बाम्॥ २९॥

**अपूर्वाकारां काञ्चिदखिलजगन्मातृभूतां प्रति त्वं**
**यदा कर्ता पापांतिमिति तदा तत् सकाशाद् बधस्ते।**
**भविष्यत्येवेति त्वयि जगदबध्यत्वकामे**
**वचः प्रोक्तं तन्मा चपलहृदयोऽभूद् भवान् भूरि दृश्वा॥ 63॥**

**वाक्यं स तस्यावगणय्य दूतं प्रास्थापयत्तां प्रतिमर्त्तुकामः।**
**रोगी विहायौषधमत्र मृत्युर्द्वारं समुद्घाट्य भजत्यपथ्यम्॥ 64॥**
**वरतनु! शुम्भ इति श्रुत उदयति भुवन-भवनपरमेशिता।**
**तव गुणबद्धहृदा मयि तेन हि दूतता विनिवेशिता॥**
**निजगाद सोऽमलमण्डिकाम्। कोमलवचनं चण्डिकाम्॥** ध्रुपदम्॥
तव बहुपुण्यमनन्यसमानमनन्यजदमनविभावितम्।
शृणु दनुवंशवतंसमणेरिदमादर-चारु सुभाषितम्॥
द्रुहिण-विमानमनायि मया बलमानसुधवलविहङ्गमम्।
ददुरमरा जलधिप्रभवं मम निजयश इव चतुरङ्गमम्॥
तरुण-हिमगुरुचिररुणसितातपवारणमपि ममालये।
अविरलहेमपरिश्रुति तिष्ठति सततरुदितमिव भयादये॥
मदकल-दिक्करिकागतिशिक्षित-गतय विचकसन्मुदा।
मदकल-दिक्करिणोऽपि मदङ्गण-आदधति रसितं सदा॥
दनुजपतिं भज मामयि मानिनि मदनुजसुतनु-निशुम्भकम्।
सकलरसातलशासनशरशतदलितसुरकरिकुम्भकम्॥
मम धनसम्पदियं परमं पदमिदमिदमपि च जीवितम्।
तव वशगं सकलं सकलामृतकरमुखि मम कुरु मनीषितम्॥
निगदति '**कृष्ण**' इदं मद-दारुण-दानवपटलविखण्डिका।
त्रिभुवनसर्जनपालनसंहृति-हेतुरुदयति हि चण्डिका॥ ३०॥

**स्त्रीरत्नभूता भवती रत्नभागभुजो वयम्।**
**जीवितेश्वरभावत्वं मयि दर्शय भाविनि॥ 65॥**

**अनुपमजनुषो दनुतनुजनुषो ननु समुदितगर्द्धनम्।**
**मिलिता समितावनुमतचरिता तनुवरतनुवर्द्धनम्॥**
**उचितं वचनं कथितं मया महसा विधेहि सहसा॥** ध्रुपदम्॥
जगतामहितं मानय सहितं नयमहिशयनाटनम्।
सकला जगती भजति हि भवतीमनुपलमुदिताननम्॥

अरुणिममधुरे मृदुभवदधरे यावकरसरञ्जनम्।
स्थितिरिति बहुशो विदधति सुदृशो दृशि च सदृशमञ्जनम्॥
तव पदरजसा मुदिता मनसा शिरसि दधतु लालनम्।
अनुबहुधा विबुधा विविधान नु विधाभिलषितनिजपालनम्॥
कलयतु कलयाचलमणिवलया सुरवरपुरबालिका।
गायतु सुतरामितरातिवरा ननृतुः सकरतालिका॥
अतिशयरुचिरं प्रतिहततिमिरं फणमणिगणदीपकम्।
विदधतु सुभगा इह तव भुजगा उपगत्यसमीपकम्॥
समुदयविभवोऽनुदिवस-मृतवो ददतु वत तवोचितम्।
अरुचिरसुषमं निजफलकुसुमं कलय नयनमोदितम्॥
न विशतु परुषं कलियुगकलुषं **मैथिलकविकृष्णके।**
प्रमुदितदिविजादृतगुणगिरिजा-पदभजनसतृष्णके॥ ३१॥

**"दूतवाक्यं समाकर्ण्य परिपूतजगज्जना।**
**गम्भीरमधुरोदारं स्मयतेस्म महेश्वरा"॥ 66॥**

**त्रिभुवनमवति शुम्भो भुवि स इव स एव।**
**उचितमकथि भवता न वितथमिह भवतेव॥**
**अवददियं वचनं सुस्मितदीधितिः॥** ध्रुपदम्॥
इह तु लघुमतिमत्या हृदिनिधाय किमपि परिपत्या
ooooooooooooooooooooooooooooooo॥
oooooooooooooooooooooooooooo वधाय॥
जयति रणभुवि यो मामसि-शररचनेन।
अपनयति सपदि यो मम [दमनेन]॥
ooooooooooooooooदमयं यो जगति मम याति।
सविधि स मम करग्रहमहमिह विदधाति?॥
मम नयन-प oooooooooooooo गाम।
न तदनुगुण-गुणवानधिसकलजगति नाम॥

तनुजपतिरिह शुम्भस्स्वयमयमुपचय ०००००००००।
०००००००००००००००००ना मम नियममवदधातु॥
उचितमनुचितम्वा सह हितसचिवेन।
विमृशतु सुख ००००००००००००००००००००००० ॥
०००००००००००००००००००००००००००००००न।
इति भणति **कविकृष्णो** बहुविधविनयेन॥
अभिमुखयत गिरिजा सपदि ००००००००००००००।
००००००००००००००००००००००००००००००००००॥ ३२॥

**०००० बहुभीषयित्वा पूर्णाञ्जागात्सिद्धिकरीमपर्णाम्।**
**दूतः समाग ०००००००००००००००००००००००००॥ 67॥**

**इतिश्री मैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां 'देवीदूतसम्वादो' नाम षष्ठः सर्गः॥ 6॥**

# सप्तमः सर्गः

**०००००००००००००००० नेयेति तेन प्रहितश्चमूपतिः।**
**स्वसेनायाधिष्टिसहस्त्रसंख्यया वृतो ययौ ००००००००० ॥ 68 ॥**
**००००००००००००००००००००० विदारितवारणकुम्भम्।**
**अस्मदधीश्वरमुपसर शुम्भम्॥**
**सोऽभिदधेतामनु** ०००००००००००००००००००००ध्रुपदम्।
००००००००मया कथनीयम्। प्रकटितमेव तदाकलनीयम्॥
अनुपमशीलवती भवतीयम्। ०००००स शीलसुताचरणीयम्॥
मम वदतस्तव किं लभनीयम्। एष नयामि बलेन गतेऽह००० ॥
०००००००००००००००००००स्वामिनिदेशवतः करणीयम्॥
तेन यशो भविता कमनीयम्। प्रबल ०००००००००००००० ॥
०००००००००००००००००००। त्वद्बलकलने तु ममापि मनीषा।
तव पदपङ्कजसेवनचित्तम्। **कृष्णदत्तमवदे** ०००००००००० ॥ ३३ ॥
**तमापतन्तं रभसेन भस्मसाच्च ०००००००००००००००।**
**०० क्षितिभानुचन्द्रमस्तनोः शिवस्याङ्गविलेपनाय किम्॥ 69 ॥**
**उच्चोन्न ००००००००००००तदोडुमिषतोऽम्बरपट्टिकायाम्।**
**सिंहोऽसुरान् प्रहरतो निजधान सर्वं ००००००० शयत्तान्॥ 70 ॥**
**शुम्भान्वरेणाथ चमूसमेतौ तौ चण्ड-मुण्डौ प्रहितौ समेत्य।**
**स्व००००००००००००००मम्बां ग्रहीतुमुद्योगपराव्भूताम्॥ 71 ॥**
**कालीं ललाटात्समुदेष्यतीं त्वां संसूचयद्दैत्यव्य ००००००।**
**उदीयमानेन्दुनिभं प्रकोपान्मुखं मसीरागमुवाह देव्याः॥ 72 ॥**
**स्फुटत् ०००००००००० ललत्तरङ्गा ०००००००००००॥**

**ooooooooooooooooooooooooooooooooजरङ्गा।**

**यामुनवेलिरिवात-तरङ्ग-तरङ्ग-तरङ्ग भुजङ्गा॥**

**देवी निटिलतटं ooooooooooooooooooooooooo।**

**ooooooooलताकुटिलतमादुदभवदिन्द्रनीलचयकाली॥** ध्रुपदम्॥

पाशमपाशितवैरिदुराशयमेकभुजेन दधाना।

कज्जलशैलतटीव-तलद्रुम-वलयितवल्लिविताना॥

उन्नतफणभरमणिगणनिर्भर-वरफणधरविकरालम्।

चित्रविचित्रतरं दधती नवखट्वावयवमरालम्॥

चण्डमुण्डधरणोचितमनुगतसुरवरवितरणदक्षम्।

एकतरं दधती करमङ्गुलिशूलविरुग्नविपक्षम्॥

गलतलकलितकरालतरालसदविरलतरनरमाला।

द्यौरिव युगपदुदित्वर-दिनकर-हिमकर-तारकजाला॥

असुरजनग्रसनव्यसनप्रसरद्रसना-दशनाली।

जलदघटेव विसारि सचापल-चापलता-बकपाली॥

अम्बरीषदहनोपमरक्तनिमग्नविलोचनभेशा।

द्वीपिचर्म्मपटारिबुभुक्षित-शुष्कशरीरनिवेशा॥

'कृष्णदत्त' इति निगदति दुर्जनदारणदारुणरूपा।

काली भक्तमनोरथपूरणकल्पलताशुभरूपा॥ ३४॥

**विदारयन्तीव नभो निनादैर्वेगेनभूमिं परिकम्पयन्ती।**

**पपात सा दानवसैन्यमध्ये कक्षे विशुष्केऽग्निशिखावलीव॥ 73॥**

**सा भोक्ष्यमाणा बहुरक्तबीजजान्सुरान्यथेच्छं तदसृक्प्रपायिनी।**

**निमन्त्रिता युद्धमहोत्सवेषु या विभोज्यवच्चण्डचमूमभक्षयत्॥ 74॥**

**चण्डश्चण्डशरव्रातैर्मुण्डश्चक्रैश्चभूरिभिः।**

**च्छादयामासतुः कालीं भीमाक्षीं वितताननाम्॥ 75॥**

**चक्रशतं गिलतिस्म सुवक्त्रम्। प्रलयघनालिरिवारुणचक्रम्॥**

**कालिका विजहार महायुधि॥** ध्रुपदम्॥

शक्तिशरादि-वरायुधजालम्। चर्वयतिस्म गजीव-मृणालम्॥

अतिविकटकटकटायितदन्तम्। व्यहसदलं पूरितहरितदन्तम्॥

रभससमुल्लसितासि-विशेषा। हा दितिचण्डमुपारारदेषा॥

श्मश्रुणि ताम्रशितौ कलयित्वा। अच्छिनदस्य शिरोऽतिमहत्त्वा॥

विहरन्तं युधि बहुविधगत्या। मुण्डमपातयदस्यभिहत्या॥

चण्डशिरस्स्वकरेण दधाना। मुण्डमपि स्फुरतिस्म समाना॥

सुकृतिपुरन्दरसोदर[1]गीतम्। मोदरसं तनुतामविगीतम्॥ ३५॥

**सा चण्डिकामाह मयोपनीता**

**विमौ पशू ते किल चण्डमुण्डौ।**

**मदोद्धतौ शुम्भनिशुम्भदैत्यौ**

**स्वयं निहन्तासि महाहवे[2] त्वम्॥ 76॥**

**स्मितज्योत्स्नासारस्नपितमिव शुद्धं वच इदं**

**जगन्मातो चेतां विहितहितसिद्धिं सुमनसाम्।**

**त्वया चण्डो मुण्डो मदुपकृतयेऽनीयत यत-**

**स्ततश्चामुण्डां त्वा[ म ]भिदधतु निरुक्तार्थकुशलाः॥ 77॥**

**इतिश्री मैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां**

**'कालिकाविर्भावो' नाम सप्तमः सर्गः॥ 7॥**

---

1. सुकृतिः = पण्डितः, पण्डितः पुरन्दरः कृष्णदत्तस्य सोदरः आसीदित्यत्र स्फुटीभवति।
2. आहवः = युद्धः इत्यमरः।

# अष्टमः सर्गः

**श्रीमन्ति सैन्यानि सरक्तबीजान्याज्ञाप्य सर्वाणि ततो दृढाज्ञः।**
**विनिर्जगाम स्वयमेष शुम्भः समं निशुम्भेन समग्रदम्भः॥** 78 ॥
**दिग्व्योमभूमिषु समप्रतानां तामापतन्तीं दनुजेन्द्रसेनाम्।**
**दृक्कोणदेशे विनिवेशयन्त्या-चामुण्डया सा जगदेऽथ चण्डी॥** 79 ॥
**चलबहुधातुझरोपचिताचलविभ्रमसम्भ्रमदेन।**
**भूतिधरेण करिप्रकरेण विराजितमिद्धमदेन॥**
**पश्य दनुजबलम्। भगवति समुपगतमखिलम्॥** ध्रुपदम्॥
गगनमिवामर-चापकलापकवर्षिधनप्रकरेण।
कुवलयमिव मणिभङ्गितरङ्गितरङ्गसमुद्रभरेण॥
रथ-घनचक्रपरिक्रमणक्रम-नर्तितचकितकलापि।
बहुविधजाति-पदाति-पदाति-भराहत-भूपरितापि॥
चित्रपदक्रमदर्प-विसर्पण-तुङ्गतुरङ्गमकोटि।
भारबहिर्भवदहिरसनायित-रक्तपटध्वजकोटि॥
आयुधदर्शित-गगनसरोवर-नीलसरोजललाम।
दुन्दुभिनाद-समुच्छलदम्बुधि-जलमज्जितहिमधाम॥
हाटकजटित-विशङ्कट-सङ्कट-लोहजकङ्कटधारि।
धूमपिनद्ध-हुताशकरम्बित-कज्जलगिरिमतिकारि॥
ओष्ठपृष्ठभवलोमलतामभिमृशदकृशस्मितपालि।
कोपहुताशन-धूमशिखामिव वीरपानमदशालि॥
देवीचरणसरोजमधुव्रत**कृष्णदत्त**लपितेन।
मोदमुपैतु सदैव सदावलिरमृतरसस्नपितेन॥ ३६॥

कल्पान्तोन्ननदब्दनिर्भरधनुर्ज्याशब्दन्झम्बातनो-
हर्यक्षस्थमधूक्षयन्निजरवेणानुक्षणोल्लासिना॥
सा घण्टानिनदेन तञ्च बहुलीचक्रेऽथ कालीव्यधा-
दारावेण कराभिताडितधरा शब्दैकमात्रं जगत्॥ ८० ॥

**क्रुद्धैर्विरुद्धैरथ युद्धमुद्धैर्देवी च काली च हरिश्च दुर्द्धैः।**
**विलोलपक्षैः परिवारिता भृशज्वलत्पतङ्गैरिव पावकत्रयी॥ ८१॥**

**ब्रह्माणी गतिशिक्षणयुक्त-विमाननियुक्तमराला।**
**समर-सिसृक्षुरुदञ्चित-करतल-कलित-करकजपमाला॥**
**अवसरविज्ञतया किल दुर्गाम्।**
**मातर उपययुरनलशिखा इव सप्ततदारणदुर्गाम्॥** ध्रुपदम्॥

माहेशी शितशूलकरा सितकुलण्डलिकङ्कणवाहा।
स्फुटशशिखण्डशिखण्डधराम्बर-माहेयीपतिवाहा॥
ललितकलाप-कलाप-कलापि-रथा शिखि-पिच्छवतंसा।
कौमारी-करकमलकरम्बित-शक्तिविचुम्बितहंसा॥
चक्रगदाधनुशङ्खबलत्कर-लसदसिवरभुजमूला।
वैष्णव्यपि गरुडगतासित-तनुवलयितपीतदुकूला॥
महिषमहासनगा महिमण्डलतुलनदशनपृथुतुण्डा।
वाराही बहलज्ज्वलदुज्वल-चक्रानलकरकुण्डा।
खरतरनखरकरालकरानन-दलनभकेसरकेशा।
नरहरिरूपवती नृहरेरपि शक्तिरसङ्गनिवेशा॥
ऐन्द्रीकुलिशभृदुद्यतदशशत-दृष्टिरिभाधिपयाना।
रजतगिरिगवलितभ्रमिकुवलय-वलयितसरिदुपमाना॥
**सुकृतिपुरन्दर-कुलपति[1]सोदर-सोदरपुरकुलजन्मा।**
कथयति मातृगणानुगुणामिह भजति शिवां शुभजन्मा॥ ३७॥

---

1. कुलपतिनामाऽस्य कवेःद्वितीयः सोदर इति स्पष्टीभवति।

**ईशस्तुतस्ताभिरशेषशक्तिभिः।**

**स्समावृतो वाचमुवाच चण्डिकाम्।**

**विलम्बसे किं न खलेषु ते दया**

**निहन्यतां दैत्यबलं मुदे मम॥ 82॥**

**समुदभवदमुष्याश्चण्डिकायाश्शरीरादतिविकटशिराली नादिनी कापि शक्तिः।**
**अथ निजशिवदूती नामयोगार्थतार्थं शिवमुदितजटं सा दूतभावे न्ययुङ्क्त॥ 83॥**

**इह शतयज्ञो निखिलनयज्ञो भवतु जगत्त्रयपाली।**
**लभते सम्पदमतिसरसं पदमपि सुकृतोदयशाली॥**
**त्वमनवधूतो भव मम दूतो गच्छ सुरारिसमाजम्।**
**धर्म्मसमेतां मम गिरमेतां बोधय दितिसुतराजम्॥** ध्रुपदम्॥

उचितविभागं निजनिजभागं भजतु मखे तत होमे।
त्रिदशनिकायोऽनधिगतमायो न हि सीदति भजनो मे॥
द्युषदधिकारं विगतविकारं सुमनस एव लभन्ताम्।
न खलु भवन्तो दधति रटन्तो नवकाहंसगतिं ताम्॥
जीवितुमिच्छा यदि तृणपिच्छा दितिरपि धत्त च देहम्।
स्फुटमविलम्बं सनिजकुटुम्बं प्रविशत वा बलिगेहम्॥
मृदितसुपर्वाधिकबलगर्वादथ यदि युद्धविधित्सा।
झटिति तदत्रागच्छत तत्रावतरति का विचिकित्सा॥
अतिरसनीयैरिह भवदीयैरुधिरपलैरविरामम्।
फेरवचटुलं फेरवपटलं मम परितृप्यतु कामम्॥
स्वस्सुखममुना वपुषा खलुनाऽनुभवितुमलमिह यूयम्।
तदभिनिवेशा भजत महेशा शरदहनाहुतिदूयम्॥
इतिशिवदूती गिरमभिभूती कृतविबुधारिमुदीताम्।
मोदितविबुधां कलयत-विविधां '**कृष्णदत्तकवि**'गीताम्॥ ३८॥

यूयञ्च कश्यपसुतास्त्रिदशाश्च किन्तु
देवत्वभग्यममरेषु भवत्सु नैव।
हालाहलाहलसुधांशु-सुधारमाद्याः
सिन्धूद्भवाः स्वगुणभिन्नपदस्वभावाः ॥ 84 ॥
भस्मीकृते सत्यपि धूम्रलोचने
चण्डे च मुण्डे सबले निपातिते।
तथा न कोपो ववृधे सुरद्विषां
तद्भासितैः शर्वनिवेदितैर्यथा ॥ 85 ॥
अन्धकारीकृतव्योम दिग्भुवो दानवाम्बुदाः।
अभ्यवर्षन्महादेवीमथ शस्त्रास्त्रधारया ॥ 86 ॥
उद्दण्डकुण्डलित-कुण्डलिचण्डचञ्च-
त्कोदण्डमण्डलवलच्छरदण्डवर्षैः।
शस्त्रास्त्रजातमवधूय सुरारिमुक्तं
सभ्रूविभङ्गि निदिदेश शिवा स्वशक्तीः ॥ 87 ॥
दर्शितविभवं खट्वावयवं शूलमसिं बलयन्ती।
व्यहरत काली दितिसुतपालीमतिचटुलन्दलयन्ती ॥
प्रमदमुपेता मातर एता आदघुराजि-विनोदम्।
हृदि भगवत्या मृगपतिगत्या दधिरे कमपि च मोदनम् ॥ ध्रुपदम् ॥
ब्राह्मी धीरा मन्त्रितनीरा हतिहतपौरुषमानम्।
अनुपथमेषा तनुत विशेषादसुरबलं बलमानम् ॥
शूलविभिन्नां व्यधित विखिन्नां माहेशी रिपुसेनाम्।
श्रीपतिशक्तिस्समुदितयुक्तिश्चक्रमुखाहुतिमेनाम् ॥
तुण्डवितुन्नं दशनविनुन्नं वाराही रणवीरा।
निनदनिपातितमसुरं शायितमधितनृसिंहशरीरा ॥
अपि कौमारी रणभुवि मारी विलसितमरिषु वितेने।
रविसुतदण्डादप्यतिचण्डा शक्तिस्तैरिह मेने ॥

ऐन्द्री-वक्त्रे संयुगचक्रे समुचितसमयसपोषम्।
सफलीचक्रे दितिसुतचक्रे चिरतर सञ्चितरोषम्॥
अथ शिवदूती निनदनिरूतीकृतमसुरं निगिलन्ती।
रुरुचे ताभ्यो निजकशिवाभ्यो बलिमुचितं विभजन्ती॥
कृतबहुविनयो **भगवतिनयो** हृदि पुटयन्निजपाणी।
नाथति मातस्तवगुणजातस्तव निरता मम वाणी॥ ३९॥

**भूमी पततच्छोणितबिन्दुसंख्य-**
**स्सद्यः समुद्यन्नवरक्तबीजः।**
**भातृप्रकोपार्दितनष्टदैत्य-**
**रक्षार्थमायादथ रक्तबीजः॥ ४४॥**

**वासवशक्तिरताभयदाहव रसविभवासवमत्तम्।**
**तमचलमिव कुलिशेननिशात-शिखेन भृशा तत सत्तम्॥**
**चिरपरिचितया सुरपतिशक्त्या।**
**सह युयुधे समदारुण-दारुण-दृष्टिगदायुधयुक्त्या॥** ध्रुपदम्॥
तमिभिजधान महाबलमुद्यतचक्रगदादिभिराजौ।
मधुरिपुशक्तिरुदञ्चितशोणितबिन्दुज-दानवराजौ॥
वैष्णव्यभिमुखमेनमभर्त्सयदतिमहसा वचसा सा।
शिरसि बिभेदभृशं-पविना[1] धृतदशशतनयनविलासा॥
अचलशिलातलफलकविघर्षण-शिततमया तत शक्त्या।
क्रौञ्चमिवाभिनदुदयदसृक्तति कौमारी निजशक्त्या॥
यज्ञवराहतनोरपि शक्तिरताडयदसिलतया तम्।
माहेशी निशितेन विभेद च शूलेनानभिजातम्॥
निधनपदं गमितो विततायुध-बहुविधनिहननयुक्त्या।
मातृभिरेष सिषेव धरातलमविरलशोणितमुक्त्या॥

---

. पविना = वज्रेण।

प्रतिविस्यति बहुशस्म गतव्यथ सस्मयमातृसमूहम्।
निजगदया जगदर्च्चितया सुरनिकरं विदधदनूहम्॥
**कृष्णदत्तकविराज-**[1]सुभाषितमातृगणाहवलीला।
सुखयतु सुजनसमाजमनाकुलममलसुधारसशीला॥ ४० ॥

**देहप्रस्रवदस्रबिन्दुभवता दृग्रक्तबीजावली**
**व्याप्ताशेषजगत्त्रयः कृतवपुर्व्यूहप्रबन्धोदयः।**
**शक्त्यस्त्रोद्दलनादशोकविटपिभ्रान्तिं ददानोऽपि स-**
**न्देवानामभवत्सशोकविटपी हा! रक्तबीजासुरः॥ 89 ॥**

**अव्याकुलसङ्गररङ्गसत्वरा**
**मुदे सुराणां जगतामधीश्वरा।**
**विहस्य युद्धाभिनिवेशपेशलां**
**स्फुटाक्षरां वाचमुवाच कालिकाम्॥ 90 ॥**

**असुररुधिरयदि विषदरिभरितम्।**
**भुवनमिदमभवदतिशयचकितम्॥**
**कालि समुपनतम्। स्वयमिह हि भवदभिलषितम्॥** ध्रुपदम्॥
कुरु निजमुखमिदमनुपमविततम्। पिव निभृतमिदमसृगमृतमुचितम्॥
निपतति न भुवि यथा रुधिरकणा। वितनु तथा सकलसदवनचणा॥
कटुदशनकटकटध्वनिमुखरम्। चर्वय तदुदितमसुरप्रकरण्॥
क्षुधमपनय किमपि शिथिलयतृषम्। नन्दय शरणगतदैवतवृषम्॥
शक्तिजनायुधपतनभभकिते। दितिजा सृजिभयमीदृशमयते॥
बहलमदायुधवासनसमये। भविता का गतिरिह सुरवलये॥
**मैथिल**कथितशिवाशुचिवचनम्। जयति जगति विहित-सुधा-रचनम्॥ ४१ ॥

---

1. कविरयमत्रात्मानं 'कविराज' पदेन निर्दिशति।

उक्तेति देवी निजधान रक्त-

बीजं त्रिशूलेन दुरन्तबीजम्।

प्रत्यैच्छदालोलितविस्तृतास्या

काली तदङ्गस्त्रवदस्त्रधाराम्॥ 91॥

निजया गदया जघान चण्डीं प्रतिकारप्रवणः स रक्तबीजः।

परमेश्वरया तया मता सा निपतन्ती नवमिल्लमालिकेव॥ 92॥

परिकुपितमेहशा तीव्रशस्त्रास्त्रनुन्नः

सरभसतरकाली पीतनिःशेषरक्तः।

असुरपतिजयाशा-वल्लिभिः सार्द्धमुर्व्यां

सतरुरिव कुठारश्छिन्नमूलः पपात॥ 93॥

ब्राह्म्यादयो मातर आत्तशस्त्रा-

स्तान् रक्तबीजप्रभवान्सुरारीन्।

सुखेन हत्वा ननृतुः प्रहर्षा-

दिष्टार्थसिद्ध्या तुतुषुश्च देवाः॥ 94॥

इतिश्रीमैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्षगायां 'शक्तिसमुदयो' नामाष्टमः सर्गः॥ 8॥

# नवमः सर्गः

**श्रीचण्डिकां शुम्भनिशुम्भदानवा-**

**वुपेयतुस्तौ प्रतियुध्य मातृभिः ।**

**भागावमुष्या इति ताभिरुज्झितौ**

**स्वयं शुचिप्रोक्षितसत्पशू इव ॥ 95 ॥**

**परस्परप्रेरितशस्त्रवर्षण-**

**प्रकर्ष-संघर्षजविस्फुलिङ्गकः ।**

**देवर्षिसिद्धावलिरोमहर्षण-**

**स्तयोस्तु या सार्द्धमवर्द्धताहवः ॥ 96 ॥**

**समरससमरसमुत्सुकतरसा । शुम्भानुजनुष-आयतउरसा ॥**

**सिंहरथा । वैदिकगाथागीतकथा ॥** ध्रुपदम् ॥

असिमलुनादिषु शाततरभसम् । ताडितवाहनकेसरिशिरसम् ॥

अष्टदिगुद्यतचन्द्रकविमलम् । नभ इव चर्म्मविभेद च विपुलम् ॥

कृत्यामिव शक्तिमुपाकलिताम् । चक्रे चक्रमहामनुदलिताम् ॥

क्षिप्तमनेन धृता यतिशूलम् । व्यातनुत मुष्टिविधूननतूलम् ॥

सपदि गदामस्वनत्परिमुक्ताम् । भस्मयतिस्म च शूलनिषक्ताम् ॥

परशुसमुद्यत-बाहुमुपेतम् । मोहयतिस्म शरेण रणे तम् ॥

'**मैथिलकृष्णकवे**'रिदमुक्तम् । जगदम्बागुणवर्णनयुक्तम् ॥ ४२ ॥

**ततो वियद्व्यापिसमुद्यतास्त्र-स्पष्टाष्टबाहुः सुमहारथस्थः ।**

**भ्रातुः प्रतीकारविधिं विधित्सुः शुम्भोऽभ्यगात्सैन्यवृतोयुयुत्सुः ॥ 97 ॥**

**अयमधुनापि न वेदविधेयम् । इति किमुदञ्चितहास-कलेयम् ॥**

**अम्बिका परमाहवसंसदि** ॥ ध्रुपदम् ॥

रिपुमपसारमिवोपहसन्तम्। विबुध-सुविश्वसितं प्रथयन्तम्॥
मुखजितमिन्दुमिवोपसरन्तम्। सुयश इवाधिकशुचि-गुणवन्तम्॥
अधरपुटे विनिधाय सलीलम्। स्वनयति शङ्खमतिध्वनिशीलम्॥
घण्टारणित-भरेण दिगन्तम्। परिपूरयति च विचलदनन्तम्॥
इममधुनैव हनिष्यसि शुम्भम्। अनुगमयिष्यसि किन्तु निशुम्भम्॥
प्रष्टुमिवेति गतं श्रुतिमूलम्। ध्वनयति सुगणं धनुरनुकूलम्॥
देवि! भवत्पदभजनसतृष्णे। कुरु सदयं हृदयं **कविकृष्णे**॥ ४३॥

**चामुण्डा शिवदूती मृगाधिपस्वानभारमांसलितैः।**
**घण्टाब्ज-चापनिनदैस्तत्सत्सैन्येत्यकुप्यदसुरेन्द्रः॥ 98॥**

**उद्धतशक्तिलसद्भुजदण्डम्। सिंहनादभरभृतजगदण्डम्॥**
**इममिदमाह यदा जगदम्बा। कोपपरिस्फुरिताधरविम्बा॥** ध्रुपदम्॥
तिष्ट दुराशय दुर्मदराशे। क्वनु गन्तासि यतो यमपाशे॥
विबुधजनेन विधाय विरोधम्। को न गतो विपदं गतबोधम्॥
जय जय जननि! जयेति तदानीम्। सुरकुलमाह गिरं गुणधानीम्॥
गगननिलीननिभृतनिश्वसितम्। तत्क्षणविश्वसित-समुच्छ्वसितम्॥
द्रुतमुपगत्य तदा दनुजनुषा। शक्तिरमोचि शिवोपरि सरुषा॥
प्रसरदलातमहायुधभासा। सपदि निरासितयाऽनलभासा॥
'**कृष्णकवे**'रिति वचनविलासम्। शृणुत बुधा बहुधा सुखरासम्॥ ४४॥

**लीलाविमुक्तेन महेश्वरायाः**
**शूलेन भिन्ने हृदि निस्सहाङ्गम्।**
**मूर्च्छाथ शुम्भं द्रुतमाललम्बे-**
**त्यक्त्वा निशुम्भं गुणकाम्ययेव॥ 99॥**

**अपगतमूर्च्छनवेगमनाकुल-कृष्टशरासनदण्डम्।**
**अविरलपातिसरालिसुमाचितदेवीहरिचामुण्डम्॥**
**दुर्गा दुर्गतिदारणदक्षा।**
**शुम्भानुजशरचक्रनिकर्त्तनदर्शितगुरुशरशिक्षा॥** ध्रुपदम्॥

प्रविततमायतया विहितायुत-बाहुमुदीरितचक्रम्।
पिहितसहस्रकरं सहसावलि-नन्दनदशगुणपौरुष-वक्रम्॥
समदसुरारिघटापरिवारितमिभपतिमिव तत हस्तम्।
प्रहरण-समयविकारिगदायुध-रदपरिदलनविहस्तम्॥
वलित-ललिततरशूलमहाकरमविरलमदमुपयन्तम्।
सम्भ्रम-चञ्चल-कुन्तल-मधुकर-पटलमनाकलयन्तम्॥
भ्रमणसमुल्लसदनलकरेण विशङ्कयता किल शुम्भम्।
हृदि विविभेद शिलाफलकद्युति-निजशूलेन निशुम्भम्॥
शूलविभिन्नहृदो हृदयादथ तस्य बहिःप्रभवन्तम्।
सञ्चितसङ्गरवासनया भृशमयि तिष्ठेति वदन्तम्॥
पुरषमपरमवहस्य घनस्वनमसिवरविदलितमस्तम्।
सपदि विधाय धरावलये परिपालयतिस्म ततस्तम्॥
शृणुत निशुम्भवधं विबुधव्रजविविधसुखैकनिधानम्।
'**कृष्णदत्त**'वचनप्रतिपादितमम्बागुणगणधानम्॥ ४५॥

**केचिच्चक्रहतास्त्रिशूलदलिता एकेऽपरे पाणिज-**
**श्छिन्नाः केचन तुण्डधातलुलिताः शक्त्या परे दारिताः।**
**अन्ये मन्त्रजलाहताः कतिपये वज्रक्षता भक्षिताः**
**केचिन्मातृभिराप्तसिद्धिभिरिति ध्वस्ताः निशुम्भानुगाः॥ 100॥**

**इतिश्रीमैथिलकृष्णदत्तकृतौ चण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां**
**'चण्डिकापराक्रमो' नाम नवमस्सर्गः॥ 9॥**

# दशमः सर्गः

**श्रीमङ्गलासंय्यतितामजय्यामक्षय्यशक्तिञ्च विभाव्य चित्ते।**
**वाचैव दर्पं विनिनीषुरस्याः शुम्भो वभाषेऽथ निशुम्भहन्त्रीम्॥ 101॥**
**करकलितायुधमिदमतिसंख्यम्। निपतितमिह मम बलमधिसंख्यम्॥**
**चण्डि! कथं मानमुपैसि विमुक्तपथम्॥** ध्रुपदम्॥
कपटवतीभिरमूभिरिहेदम्। व्यवसितमवसितखेदविभेदम्॥
विधिहरिहरगुहसुरपतयस्ते। मम न विकर्त्तुमलं रणमस्ते॥
अनुकम्पोचितमबलारूपम्। ध्रुवमवलम्ब्य चरन्त्यनुरूपम्॥
परबलमिदमवलम्ब्य भवत्या। युध्यत एवमहो मदवत्या॥
कपिभिरबन्धि पयोनिधितोयम्। रघुपतिराप तदुत्थयशोऽयम्॥
स्वयमसहासि तृणस्य विभेदे। अन्यगुणं भवती प्रतिपेदे॥
निगदति '**कृष्ण**'इदं खलु भुवने। परगुणकथनं न हि खलवदने॥ ४६॥

**गाम्भीर्यौदार्यमर्यादा-स्थैर्य-धैर्यगुणाम्बुधिः।**
**विहस्य वचनं प्राह यथार्थं परमेश्वरा॥ 102॥**

प्रतिपदसमुदितमुदितविवेका। केवलमस्मि जगत्यहमेका[1]॥
आवृतनयनो दूषणतमसा। दुष्ट न पश्यसि नश्यसि सहसा॥
का पुनरस्ति जगत्सु मदन्या। विलसदनन्यसदृग्गुणधन्या॥
मत्त इमा इति उदगुरियत्या। दिवसमणे रुच इव विधिगत्या॥
शक्तय एता मयि निविशन्ते। सरित इवोदधिपयसि दुरन्ते॥
च्युतदत्ताक्षरजातिविभक्त्या। अबलातत्त्वमवेहि सुयुक्त्या॥
मद्वचनस्थितशक्तिनिबद्धम्। कर्म तनोति यशो मम शुद्धम्॥

---

1. एकैवाहं जगत्यत्र द्वितीया का ममापरेत्यस्य च्छायानुग्रहणम्।

समुचितशिष्यनिवेशितविद्ये। भवति गुरौ गुरुता गुणहृद्ये॥
**'मैथिल'** भाषितदेवी-कथितम्। जनयति मङ्गलममलप्रथितम्॥ ४७॥

**इति पटुनिगदत्याश्चण्डिकायाशरीरे**
**प्रविविशुरसुलक्षं शक्तयस्ताः समस्ताः।**
**इह हि नियतमेकैवाहमस्मि स्थिरस्त्वं**
**रणशिरसि भवेति प्राह भूयः स्म तं सा॥** 103॥

**दाहनमस्त्रममुञ्चतशुम्भ-उदञ्चितचण्डहुताशम्।**
**नील-विलोहित-धूमशिखाशत-पिहितलुलितनिखिलाशम्॥**
**अस्त्रकलितमुभयोरथयुद्धम्।**
**इषुपथदूरगदर्शिसुरासुरविस्मयभयपरिणद्धम्॥** ध्रुपदम्॥
अविरलधारघनावलिबद्ध-दिगञ्चलचञ्चलवस्त्रम्।
देवी तत्प्रतिघातविधायकमाधितवारुणमस्त्रम्॥
पर्वतशस्त्रमयं विससर्ज जगर्ज च लोलशिरस्त्रम्।
कौशिक्यपि कौशलकृतकौशिक-कुशलाकौलिशमस्त्रम्॥
तामसमस्त्रममुष्य तमो मनसो-मनसो महनीयम्।
दिनकरशस्त्ररुचापजहार महारणहासवतीयम्॥
वैधुन्तुद[1]मस्त्रमरुन्तुद[2]मादित दितितनयोऽनुपदम्वा।
वैष्णवमस्त्रमभिक्षिपतिस्म च सारतरं जगदम्बा॥
कैतववानथ कौसुमकेतवमस्त्रमधत्त सघोरम्।
चण्डी पाशुपताशुग-तेजसि भस्मयतिस्म कठोरम्॥
स्वापनमक्षिपदस्त्रमनुत्तममेषमहासुरपाली।
बोधमयी परिबोधनमाशुगमाशुददे कृतताली॥
भणति **'पुरन्दर-कुलपति-माणिक 'सोदर' कृष्णकवीशे'।**
वितर दयादृशमम्ब दयामयि भगवति हे जगदीशे॥ ४८॥

---

1. वैधुन्तुदः राहुरित्यामरः।
2. अरुन्तुदस्तु मर्मस्पृगित्यमरः।

**श्रीबीजं[1] देवतानां शरणमुपयतां तारबीजं[2] भयाब्धौ**
**वाग्बीजं[3] स्तावकानां निरुपधिपरमब्रह्मणः कामबीजम्[4] ।।**
**लज्जाबीजं[5] रिपूणां युधि जगदवे वर्म्मबीजं[6] तदन्ता-**
**न्यस्त्राणि क्रोधबीज[7]-ध्वनिभिरधुन्वताशेषबीजस्वरूपा ।। 104 ।।**

**आधिन्यमस्त्रेषु निरीक्ष्य तस्याः**
**क्रुद्धस्य शुम्भस्य परस्सहस्त्रैः ।**
**शरैः पुनश्छादयतो महेशा**
**चिच्छेद मुष्टौ घननादि चापम् ।। 105 ।।**

**यमरसने बहुता रभसेन समाकलितेव भुजङ्गी ।**
**असिना[8] शक्तिरलूयत तस्य करे कलिता तत भङ्गी ।।**
**दर्शित-बहुविधचतुरिमगत्या । युधि परदेवतया भगवत्या ।।** ध्रुपदम् ।।
श्येनपतत इव सरभ-समभिमुखमापततस्तत पक्षम् ।
दनुजनुषोऽथ कृपाण-फलक-भृत-आकुलितामरपक्षम् ।।
असिलतिका-दलिता-ललितायत-शरनिकरेण समानम् ।
चर्म्मचटुलशतचन्द्रकचञ्चितमपि भानुमदभिधानम् ।।
पवन-जवनमतिचञ्चलखुरहत-धरणिरजोभिरजस्त्रम् ।
अकलितपदमनुपतितैरपि परिदर्शित-दिवसतमिस्त्रम् ।।
अवधृतकेसरकेशनिपीतदिवाकर-किरणसहस्त्रम् ।
युगपदवध्यत विस्त्रवदस्त्रममुष्य तुरङ्गसहस्त्रम् ।।

---

1. श्रीबीजम् = श्रीं ।
2. तारबीजम् = ॐ ।
3. वाग्बीजम् = ऐं ।
4. कामबीजम् = क्लीं ।
5. लज्जाबीजम् = ह्रीं ।
6. वर्म्मबीजम् = फट् ।
7. क्रोधबीजम् = हूँ ।
8. अरिणा = चक्रेणेति पाठान्तरम् ।

असुरमनोरथ इव सुमहानथ पथि विपथे समयायी।
तस्य रथो गमितोऽनुदशामिह सारथिरस्य च मायी॥
मुद्गरखण्डन-रुषितनिरायुध-दानवनायकमुष्ट्या।
ताडितया हृदि पातित एष तलेन निहत्य सरुष्ट्या॥
**भगवतिनन्दन सत्कवि**'-भाषितमधुमधुरं परिपातुम्॥
सुजनमधूव्रत एव धृतव्रत ऐशं गुणमपि गातुम्॥ ४९॥

**क्षणशयितविबुद्धौ दानवः श्रीशिवायै**
**निजसमबलभावं दर्शयिष्यन्निवायम्।**
**गगनमुदपतद्द्राक्तां गृहीत्वैव देवीं**
**स्वचरितमनुरूपं स्वेच्छया कर्त्तुकामाम्॥** 106॥

**सनकसनातननारदमुखमुनिनिकरैरश्रुतदृष्टम्।**
**अविरल-परिमल-परिमिलदलिकुलगुञ्जितकुसुमसुवृष्टम्॥**
**देवी दितिसुतयोरिह युद्धम्।**
**देवी दिति सुतयोरिव समभवदधिगगनं परिशुद्धम्॥** ध्रुपदम्॥
निकषनिभे नभसि स्फुटहाटकलेखाविलसितमेषा।
व्यतनुत तनुरुचिभीरुचिराभिरचिररुचिरिव सविशेषा॥
गगनतमालक-मञ्जरिजालक-तारक-तार-विलासम्।
साचलमणिमयमण्डनमण्डलभाभिरधत्त सलासम्॥
व्यलसदविस्मितसहजशुचिस्मित-वदनरुचा जगदम्बा।
दर्शितगलितकलङ्ककलानिधि-मण्डलकोटिविडम्बा॥
व्यधित नियुद्धकुतूहलमुद्धतमथ सा जगदवलम्बा।
करणकलाप-कलापटिमालयमतिसुचिरमनवलम्बा॥
असुरवरो विधुरोऽयमसुस्रवदस्रमिव भ्रमनीरम्।
न श्रमलेशमवाप शिवा परमपि प्रहरन्त्यतिधीरम्॥
'**कृष्ण**'गिरा भणितं शृणु सज्जन-सुरजनमङ्गलवासम्।
प्रतिपदजिष्णुजगज्जननीवरयुद्धनियुद्धविलासम्॥ ५०॥

**चण्डी कोपकषायितायतदृगम्भोजा समुत्थाप्य तं**
**दूरापास्त-तदीय-तुल्यबलताऽहंभावसम्भावनम्।**
**भूयो भ्रामयतिस्म दर्शयति च द्राङ्मातृलोकं मुहु-**
**र्भूपृष्ठेऽधिकनिष्ठुरेऽथ 'रजकप्रज्झाटने 'नाक्षिपत्।।**[1] **107 ।।**

**महिमुपगत्य समुत्थितवन्तम्। उद्यतमुष्टिझटित्यभियन्तम्।**
**उरसि निधाय शिवा-सितशूलम्। शुम्भमयातयदविनयमूलम्॥** ध्रुपदम्॥
हरिहरहेतिविहतिकृतमोदे। असुरश्रीतडिदुदितपयोदे।
गैरिकवति शिखरशिखविसखम्। दितिजरुधिरभरभरितत्रिशिखम्॥
द्वेषदोषरुषितानभिभूता। सुकृतिसमं निखिलैरनुभूता।
द्वेषमशेषयदस्य च रोषम्। हृदि निहितं सुचिराय च दोषम्॥
असुरपतिस्स पतन्नतिगुर्वीम्। अचलततामुदकम्पयदुर्वीम्।
तद्भवदलितधराशुषिगत्या। दितिजततिस्तलमविशदगत्या॥
'**कृष्णभणित**'मिदमभिपठनीयम्। बुधहितदेवीगुणरमणीयम्॥ ५१॥

**रणे शयानेऽपि सुरारिराजे**
**पश्यन्त उद्ग्रीविकयातिदूरात्।**
**मायाविताशङ्कितया चिरेण**
**विशश्वसुर्नाकसदां निकायाः॥ 108॥**

**बहुसमयादुपलभ्य महाजन-सुहुतघृताहुतिसारम्।**
**शुचिरदुधूपदिवेह शिवामतिसुरभितधूमउदारम्॥**
**शुम्भ-निधनकृतजगदुपकाराम्।**
**सुखिततयोपचचार यथारुचि भूतगणोऽखिलसाराम्॥** ध्रुपदम्॥
सुपथगतासरसं शुचिजीवनममृतमयं कलयन्ती।
हंसरुति-स्तुतिमातनुते सरिदावलिरत्र लसन्ती॥

---

1. रजकप्रज्झाटनम् = मल्लयुद्धेभाषायां 'धोबियापाट' इति निगद्यते।

अचला-कुसुमित-विटपिलतावलिविपुलपुलकलसमाना।
अतिशुचिगन्धमुवाह शिवापदधृतिवसुमत्यभिधाना॥
अम्बा-चरणवितर्जितमन्थरभरचलमृगमृदुगामी।
चण्डिमदोषमपाससमीरण-ईशापदयुगनामी॥
अपगतदुर्धनदोषमनाविल-समुदयदुडुगणपुण्यम्।
सहजसमुद्भवदनुगुणनिजगुण-दर्शितबहुनैपुण्यम्॥
गगनमधत्त जगज्जननी मुद इव रजनीकरविम्बम्।
बहुलशलाकसितातपवारणमिव तत किरणकदम्बम्॥
प्रियतमया हरितामिलदलिमभिवलयति पवनमचण्डम्।
सुरुचिर-चामरचयमिव डामर-विरचितमरकतदण्डम्॥
काशीवाससलालसमानस—'**कृष्णदत्त**'वचसा सा।
तुष्यतु भक्तिविशेषविकस्वरसत्तमचित्तनिवासा॥ ५२॥

**अभीष्टसिद्धिं महतीं सुधान्धसां[1]**
**प्रसादसिद्धिं जगतश्च तन्वती।**
**सुरद्विषां सद्गतिसिद्धिदायिनी**
**कृत्वा रणं राजति सर्वमङ्गला॥ 109॥**

**इतिश्रीमैथिलकृष्णदत्तकृतौ श्रीचण्डिकाचरितचन्द्रिकायां सिद्धिलक्षणायां 'श्रीचण्डिकाविजयमहोदयो' नाम दशमस्सर्गः॥ 10॥**

1. सुधान्धसाः=देवाः इत्यमरः॥

# एकादशः सर्गः

श्रीमत्याः स्वत एव सन्मयमहो मूर्त्तेः पुनश्शक्तिभि-

युक्तायाः समरोपरञ्जितमतेः स्थातुं न शक्ताः पुरः।

तास्तां तुष्टुवुरादरादिति पुरस्कृत्यानलं देवताः

क्षोदीयोऽपि महीयसा न हि महः सन्दह्यते तेजसा॥ 110॥

**कौशजलक्षरणाधिककौशलशातितदितिसुतवर्गा।**

**ब्रह्मशक्तिरसि राजमरालविमानगताकृतसर्गा॥**

**तव चरणे नारायणि भगवति जननि नता वयम्॥** ध्रुपदम्॥

त्वमसि सुदर्शन-शङ्ख-गदा-धनुरञ्चितबाहुचतुष्का।

अच्युतशक्तिरिता गरुडोपरि दत्तपुमर्थचतुष्का॥

भालविराजितबालकलानिधिरहिवलयाधृतशूला।

वृषभरथा शिवशक्तिरसि स्मृतिशुचिमनसामनुकूला॥

सुललितपदविनिवेशपवित्रितचन्द्रकचित्रमयूरा।

त्वमसि षडाननशक्तिरुदञ्चितशक्तिकरा रणशूरा॥

दशनसमुद्धृतभूवलयाकरकलितसमुद्धतचक्रा।

वाराही भवती भवसागर-तारणततगुणचक्रा॥

कुटिलकरजशतकोटिविदारितदारुणदानववृक्षा।

नरहरिशक्तिरसि प्रकटीकृत-भक्तजनानुजिघृक्षा॥

विमलति वीटकिरीटविडम्बितबालदिवाकरविम्बा।

ऐन्द्रीनयनसहस्रधरासि च वृत्रभिदुद्यतशम्बा॥

'**सोदरपुरकुलकुमुदकलाकरकृष्णदत्तकवि**'भाषा।

मदयतु सुमनसममलमुमापदभजनविभवदभिलाषा॥ ५३॥

**महादेविपादोऽम्बुजश्रीसमस्ते**
**सुसिन्दूरलक्ष्मीः श्रुतिश्रेणिमस्ते।**
**जगत्यत्र सर्वस्वभूते समस्ते**
**नमस्ते नमस्ते नमस्ते नमस्ते॥ 111॥**

**कालिकपालिनि—सेवकपालिनि रदबकपालिकराले।**
**चण्डमुण्डपरिखण्डिनि! मण्डित-मुण्डमहामणिमाले॥**
**शशितिलके दुःखापदमपहरगतिरसि चण्डिके॥ ध्रुपदम्॥**
परिसरपरिगतविततशिवाशतवाशितनाशितदुष्टे।
जयशिवदूति विभूतिविधायिनि भूतिनिधायिनि तुष्टे॥
सर्वत आनन-लोचन-मस्तक-कर-चरण-श्रुति-नासे।
सर्वरूपवति सर्वविभाविनि सर्वशक्तिगुणवासे॥
एतदतीव मनोरममायतनयनत्रयकृतभूषम्।
अवतु सुखं तव सुजनभयामयशमनवचनरसयूषम्।
मुनिजनमानससरसि विकस्वरमनुपलमनुगतपद्मम्॥
जयति विपङ्कमिदं लसदङ्गुलिदलतततिवपदपद्मम्॥
स्वभुजकनकलतिका नवपल्लवविभ्रमदा गुणशस्ते।
वरमभयं वितरन्तु निरन्तरमम्ब! करावलयस्ते॥
त्रिभुवनवुद्ध्यधिकारिणि मानसवचनागोचरवृत्ते।
विश्वलयस्थितिसृष्टिविधायिनि पालय दोषनिवृत्ते॥
मधुरससमधिकमधुरिमपेशलकविताकौतुकभाजा।
भणितमिदं गिरिजापदभावक'**कृष्णदत्तकविराजा**'[1]॥ ५४॥

**श्रुतिप्रान्तप्रेङ्खन्नयनविहितोत्तंसनलिन-**
**क्रियाचञ्चद्भाले क्षणरुचिरसिन्दूरफलका।**
**शिरश्चन्द्राबद्धामलकुलिशमयमन्ततिलका**
**स्वतः सिद्धा भूषा भवभवनभूषा विजयते॥ 112॥**

1. महाकविरयमात्मानं कविराजपदेनाभिधत्ते।

हिमगिरिशिखर-शिखण्डिनि सुशिखण्डिनि ए।
जननि जयन्ति भवानि! जयजयदेवि शिवे॥

शशधरशकलशिखण्डिनि खलखण्डिनि ए।
शौरि विधेहि शुभानि जयजयदेवि शिवे॥
करुणामृतरसवाहिनि हरिवाहिनि ए।
मङ्गलमिह तव नाम जयजयदेवि शिवे॥
असुरबलद्रुमदाहिनि परिणाहिनि ए।
दुरुपसदं तव धाम जयजयदेवि शिवे॥
मणिमय-कुण्डलभासिनि शुचिहासिनि ए।
मदकलपिकवरवाणि जयजयदेवि शिवे॥
विविधमहाम्बुधिवासिनि सुविकासिनि ए।
तव भजनं करवाणि जयजयदेवि शिवे॥
तत्पदविषयविहारिणि मणिहारिणि ए।
निगमागममहितासि जयजयदेवि शिवे॥
भगवति गतिरसि हारिणि कलिहारिणि ए।
सर्वकलाविदधासि जयजयदेवि शिवे॥
'**कृष्णदत्तकवा**'विति गायति शुभगायति ए।
देहि दयादृशमम्ब! जयजयदेवि शिवे!॥ ५५॥

**उन्मीलत्तववारिचक्ररुचिरो लीलानिबद्धोर्मिको**
**विश्वेषामभयङ्करस्तवकरः कोऽप्येष रत्नाकरः।**
**यः स्वच्छन्दममन्दरागमिलने प्याविष्करोति श्रियं**
**सन्तन्वन्नखरामृतद्युतिचमत्कारं तमो लुम्पति॥ 113॥**

**इति स्तुता भक्तिविशेषभाव- विनम्रमूर्धा सुरमण्डलेन।**
**अतिप्रसन्ना निजगाद देवी जगद्धितं साधु वरं वृणीत॥ 114॥**

**निरुपधिजगदुपकृतिमतिमत्या। उपकृतमिह बहु देवि! भवत्या ॥**
**ऊचिरे वचनं विबुधा इति ॥ ध्रुपदम् ॥**

यदयमसूदि महामदशाली। शुम्भ इति प्रथितो सुरपाली ॥
यच्च निशुम्भमुखा यमलोकम्। गमिता उद्धतसज्जनशोकम्।
प्रकटमदर्शि यदद्भुतलीला। समुदितशक्तिविजृम्भणशीला ॥
वयमुचिता यदि ते वरदाने। यदि भवती वरदा तत माने ॥
एवमेव कुरु दानवनाशम्। अस्मदिष्टसुविशिष्टभृताशम् ॥
सदसदनुग्रहनिग्रहयुक्ता। भवती सन्ततमेव सदुक्ता ॥
इति '**कविकृष्ण**'वचो रमणीयम्। सज्जनसदसि सदा पठनीयम् ॥ ५६ ॥

**करुणा-वरुणागारहृदया विनयान्वितैः।**
**इति सम्प्रार्थिता देवैर्जगाद जगदम्बिका ॥ 115 ॥**

**सुन्दनिसुन्दभवौ भवितारौ। दानव-कुलसारससवितारौ ॥**
**शश्वदहं सा भवदर्थं साधु दधे। ०००००००००००००००० ॥**
**अपरौ कावपि शुम्भनिशुम्भौ। नियतमिमाविव शुम्भनिशुम्भौ ॥ ध्रुपदम् ॥**

नन्दवधूजठरादिहजाता। अरणेरनलशिखेव सुजाता ॥
कंसविमोहनरक्षितकृष्णा। सुजनहितैकविधानसतृष्णा ॥
बहुविधनामनिकेतविलासा। समुदितविन्ध्यशिखरविनिवासा ॥
तौ विनिहत्य रणाय समेतौ। गमयिष्ये भवतः सुखसेतौ ॥
विन्ध्यनिवासिन्यभिधामुचिताम्। दधती विदधे भजतः शुचिताम् ॥
'**कृष्णकवे**'रिति वचनसुधाम्। दया मनो विबुधा वसुधायाम् ॥ ५७ ॥

**उत्पत्स्यन्ते क्वचित्ताः कतिचन दितिजाः वैप्रचित्ता क्वचित्ता-**
**न्सद्यस्थानेऽवतीर्य स्वयमतिकलया भक्षयन्त्या ममास्याः।**
**रक्ता दन्ता भविष्यन्त्यभिनवविदलद्दाडिमीपुष्पतुल्या**
**अन्वर्थं तेन लोके मम किल भविता रक्तदन्तीति नाम ॥ 116 ॥**

**प्रसरदवर्षणघर्षण-कर्षण विकलविहर्षणलोके।**

**अहमवतारवती सदयेह पुरा नयनैरवलोके**॥ ध्रुपदम्॥

भाविनि विस्मयहेतुललामे धत्तमनश्चरिते विबुधा मे।

शतनयनेति गदिष्यति मामिति मुनिजनतागतदाहम्।

सुतनु-समुत्थितशाकरसैरिदमाशु विभर्मि पुराहम्॥

शाकम्भरि जय जय शाकम्भरि शाकम्भरि हरदाहम्।

इति जगताभिनुता विदिता भुवि किल शाकम्भरिकाहम्॥

भीमाकृतिरथ पिशुन-निशाचर-भक्षणमत्र करिष्ये।

तुहिनगिरौ मुनिरक्षणधीरिति भीमानाम धरिष्ये॥

तत्र हनिष्यत आयुधवर्गविसर्ग-सुदुर्गमधामा।

रुरुतनयो[1] समया-समयारण-सीमनि दुर्गमनामा॥

दुर्गानाम तदा मम मङ्गलधाम-सतामभिरामम्।

विश्रुतमत्र भविष्यति पूरितसेवक-मानसकामम्॥

जगदहितारुण-दानव-दारण-विहितभ्रामररूपाम्।

भ्रामरिकेति वदिष्यति मामिह सदवनकरभुजयूपाम्॥

जगदुपकार-परायण-चिन्मयवपुरवतारकथेयम्।

'**मैथिलकृष्ण**'गिरा भणिता वितनोति मनोति-विधेयम्॥ ५८॥

**स्थान-स्थानविभावितस्थितिगुणौदार्यापि सर्वात्मना**

**काशीदक्षिणभागबद्धवसतिस्तां सर्वदा रक्षति।**

**सान्निध्यस्थितया तयाभिमतया भीमाख्यया भीहरा**

**मूर्त्तिर्मङ्गलकारिणी त्रिजगतां दुर्गाभिधाना[2] मम॥ 117॥**

---

1. रुरुः=मृगः इत्यमरः।
2. काश्यां यद् दुर्गास्थानम्, तदुल्लेखोऽत्र कविना कृतः।

**मूर्त्तिस्सैरिभमर्द्दिनी मम महालक्ष्मीर्महाभारती**
**दृष्टा चाद्य निशुम्भशुम्भदलिनो ज्ञातः प्रभावस्तयोः।**
**आद्याया विधिविष्णुदृष्टकरुणामाहात्म्यराशेर्महा-**
**काल्याश्चित्रचरित्रमत्र शृणुत श्रोतुर्जयश्रीकरम्॥ 118 ॥**

**कल्पवारिधिवारिकल्पितशेषतल्पशयस्य। कर्णगूथभवौ महोदधि-नन्दनादयितस्य॥**
**शृणुत चरितं विबुधा मे विचित्रमतिशयम्॥** ध्रुपदम्॥

जानुदघ्नितकल्पनीरधिपाथसौरभसेन॥ तामसप्रकृती-भृतावतिरागरोषरसेन।
नामतो मधुकैटभावसुरौ पुरोऽवकलय्य॥ अत्तुमुद्यमिनौ दृशो बहुशोभितो विवलय्य।
विष्णुनाभिसरोरुहोदरवासिना चकितेन। सुस्तुता नुतिभिर्मुहुर्बहुभिश्चतुर्वदनेन॥
आविरास तमोमयं वपुरञ्जनाचलचारु। विभ्रती सुचतुर्भुजं विधिचित्तचिन्तितकारु॥
बोधितेन विबोधितेन च लब्धदेहसुखेन। पञ्चवर्षसहस्रबद्धनियुद्धकेलिरसेन॥
मोहितौ वरदानवञ्चितमानसौ क्षणमेव। तावघातय सप्ततेन महागजौ हरिणेव॥
'**कृष्णदत्तकवे**'रियं कृतचण्डिकाभजनस्य। भारती विमला मुदं तनुतामियं सुजनस्य॥ ५९॥

**आराधिता काचन देवता स्व-**
**भक्तिं परां कापि ददाति मुक्तिम्।**
**शक्तास्मि भक्ताय चिराय भोग-**
**स्वर्गापवर्गानहमेव दातुम्॥ 119॥**

**मत्परमाशु दधामि महोदयभुक्ति-विमुक्त्यनुभूतौ।**
**सुरथमहीश-समाधिविशाविह परमनिदर्शनभूतौ॥**
**अनुगृह्णामि सदा निजभक्तम्। इति मम मनसि व्रतमवसक्तम्॥** ध्रुपदम्॥

रिपुहृतदेशसचिवहृतपुरधनपुत्रकलत्रहृतस्वौ।
गहनवने मिलितावनुचिन्तितभृशममता विवशस्वौ॥
सविनयपृष्टसुदृष्टपरावरमेधो मुनिना तत्त्वम्।
अवगमितौ करुणागुरुणाधिगतौ च मदेकपरत्वम्॥

नियतभुजावुपवासपरावपि स्वकृत-सुकृतपरिपाकौ।
मृण्मयमत्प्रतिमापरिसेवनविधिगमितत्रिसमाकौ॥
निखिलनिगमगणगीतगुणं गुरु-गुरुकरुणापरिणामे।
परिकलनीयमशेषदुरासददुरितविपाकविरामे॥
स्मितवदनं सदयं सुभगद्युति मम रूपं परमन्तौ।
वरदमपारमुदारतरं शुचि दृग्विषयी-कृतवन्तौ॥
लब्धनिराकृतरिपुमद-निजपदमनुपदतत्परमाभौ।
जलधररोधविनिर्गत-सुप्रभ-हिमकरदिवसकराभौ॥
बुधजन-चन्दन-**भगवतिनन्दन**-कविवचनं रमणीयम्।
शृणुत हृदयमधाय शिवागुण-गण-वर्णनकमनीयम्॥ ६०॥

**माहात्म्यं मम शृण्वतां सुकृतिनां सर्वार्थसंसिद्धयो**
**हस्तस्थाः सततं भवन्ति किमु मद्ध्यानार्चनाशालिनाम्।**
**यूयं मत्पदचिन्तका निजपदे निश्शङ्कमाध्वं बुधाः**
**भक्तानां स्खलितं मया सदयया सर्वं समाधाधास्यते॥ 120।**

**इत्युक्त्वा विशदगुणा विशत्स्वधामप्रीतात्मा विबुधमनः प्रहर्षिणीयम्।**
**स्वासुस्वास्वधिकृतिषु स्थिताः सुरास्ते श्रीदेवीचरणजुषां हि सर्वसिद्धिः॥ 121॥**

**अतिशयनिर्मलकोमलमरकतमणिपटली सुकुमारी।**
**शशिकलिका-तिलकाकलितालिकफलका नित्यकुमारी॥**
**स्फुरतु सदा मम हृदये दुर्गा। निरुपधि-निरवधिकरुणनिसर्गा॥** ध्रुपदम्॥

कङ्कणलम्बितचन्दनचुम्बित-चतुरचतुर्भुजरम्या।
शङ्खचक्रशरांसि गदायुतपाणितला मुनिनम्या॥
उरसि त्रिराजित-शारद-तारक-तारतरामलहारा।
गण्डललितमणिकुण्डल[मण्डित] दिनमणिमण्डलसारा॥
अरुणसितासित-सदयविलोकननयनत्रयकृतशोभा।
स्मितमधुराधरपल्लवमुखधृतशारदशीतमहोभा॥

विपुलनितम्बफलकतललम्बित-किङ्किणिकाकलनादा।
मञ्जुलशिञ्जितगतिगुणशंसक-हसंकसेवितपादा॥
पेशलकेसरकेसरिपृष्ठनिविष्टपदा शुचिलापा।
रत्नकिरीटसुरायुधराजितघनरुचिचिकुरकलापा॥
सच्चिन्मयतनुरनुपम-वैभव-रचित-जगत्त्रयरक्षा।
अनुगत-सकल-समीहितसाधन-दुर्गतिदारणदक्षा॥
देवीदत्तलसत्तमसन्मति-'**कृष्णदत्तकवि**'नेदम्।
निर्मितमम्बागीतमुदञ्चित-मुदयतु हृदि हृतखेदम्॥ ६१॥

**सिद्धिरस्तु सकले मम साध्ये सम्प्रसादविभवेन शिवायाः।**
**तत्पदाम्बुजयुगे रमणीये बुद्धिरस्तु सततं सुकृतश्रीः॥ 122॥**

**श्रीः**

**इतिश्रीमैथिलकृष्णदत्तकृतौ सिद्धिलक्षणायां चण्डिकाचरितचन्द्रिकायां**
**'श्रीचण्डिकासंप्रसादे वरप्रदानो'नामैकादशस्सर्गः॥ 11॥**

**समाप्तोऽयं ग्रन्थः**

**॥ शुभमस्तु॥ श्रीरस्तु॥**